RASHTRIYA SANSKRIT SANSTHAN, NEW DELHI
(*Kendriya Sanskrit Vidyapeetha, Tirupati Series No. 44.*)

# SATPRATIPAKṢAḤ

*OF*

SRI GAṄGEŚOPĀDHYĀYA

with **DĪDHITI** of Sri Raghunāthaśiromaṇi

*AND*

DĪDHITI - PRAKĀŚIKĀ of Sri Gadādhara - Bhaṭṭācārya



KENDRIYA SANSKRIT VIDYAPEETHA
TIRUPATI
1985

RASHTRIYA SANSKRIT SANSTHAN, NEW DELHI
(*Kendriya Sanskrit Vidyapeetha, Tirupati Series No. 44.*)

# SATPRATIPAKṢAḤ

*OF*

SRI GAṄGEŚOPĀDHYĀYA

with **DĪDHITI** of Sri Raghunāthaśiromaṇi

*AND*

DĪDHITI - PRAKĀŚIKĀ of Sri Gadādhara - Bhaṭṭācāry:



**KENDRIYA SANSKRIT VIDYAPEETHA**
**TIRUPATI**
**1985**

राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली

(केन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला-संख्या ४४

श्रीगङ्गेशोपाध्यायविरचित:

# सत्प्रतिपक्षः

श्रीरघुनाथशिरोमणि विरचितया दीधित्या

श्रीगदाधरभट्टाचार्यकृतया दीधितिप्रकाशिकया च अलंकृत:




केन्द्रीयसंस्कृतविद्यापीठम्

तिरुपतिः

१९८५

प्रथमं प्रकाशनम्    १९११

द्वितीयं प्रकाशनम्    १९३०

पुनर्मुद्रणम्    १९८५



शिक्षा मन्त्रालयान्तर्गत
नवदेहलीस्थ–राष्ट्रियसंस्कृतसंस्थानस्य कृते
तिरुपतिस्थ–केन्द्रीयसंस्कृतविद्यापीठस्य
प्राचार्येण डा. एन्. एस्. रामानुजताताचार्येण
प्रकाशितम्

उदयप्रिन्टर्स्, मद्रास् – ३३
इत्येतैः पुनर्मुद्रितं च

# सत्प्रतिपक्षः

## प्रस्तावना

पञ्चसु हेत्वाभासेषु सत्प्रतिपक्षाख्यस्य हेत्वाभासस्य लक्षणप्रतिपादकोऽयं ग्रन्थः । समानबलबोधितसाध्यविपर्ययलिङ्गत्वं, व्याप्तिपक्षधर्मतया ज्ञातत्वम्, अनिर्धारितविशेषेण बोधितसाध्यविपर्ययकत्वम् इति लक्षणानि दूषयित्वा साध्यविरोध्युपस्थापनसमर्थसमानबलोपस्थित्या प्रतिरुद्धकार्यलिङ्गत्वं, विरोधिबोधकान्यगमकतौपायिकरूपसंपत्तिमत्तया ज्ञायमानेन प्रतिरुद्धकार्यत्वं वा सत्प्रतिपक्षलक्षणमिति प्रतिपादितं मणौ । ततस्तत्रैव सत्प्रतिपक्षस्थले संशयाकारानुमितिर्जायत इति रत्नकोषकारमतमनूद्य दूषितम् । ततः सत्प्रतिपक्षस्य दूषकताबीजं विवेचितम् । मणिकारोक्तं लक्षणं सत्प्रतिपक्षव्यवहारप्रयोजकत्वात् व्यावहारिकं लक्षणं भवति ।

दीधितिकारास्तु मणिग्रन्थं यथावद्व्याख्याय अन्ते "सत्प्रतिपक्षस्तु साध्याभावव्याप्यवान्साध्यवदन्यत्वव्याप्यवांश्च पक्षः, पक्षनिष्ठौ साध्याभावसाध्यवद्भेदव्याप्यौ इत्येवमादिः प्रत्येकमेव । विभाजकं तु प्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधित्वे सति प्रकृतपक्षसाध्यग्रहाविरोधिप्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधिरूपोन्नायकत्वम्" इति विभाजकलक्षणमुक्तवन्तः । गदाधरभट्टाचार्यैः दीधितिव्याख्यानव्याजेन बहु पराक्रान्तम् । विभाजकलक्षणोपरि शतकोटिः इत्यादीनि क्रोडपत्राणि तैस्तैर्विद्वद्भिर्निर्मितानि । उत्तरवादान्तर्गतो ग्रन्थोऽयं दाक्षिणात्यैरौत्तरैश्च सर्वैरधीयते । काञ्च्यां बहुकालात्प्राक् मुद्रितस्याधुना दुर्लभस्यास्य पुनर्मुद्रणं क्रियमाणं सर्वेषामुपकारकं भविष्यति ।

पुनर्मुद्रणव्यवस्थां कृतवतां राष्ट्रियसंस्कृतसंस्थानाधिकारिणाम्, अनुमतिं दत्तवतां प्रथमप्रकाशकपुत्राणां श्री गाधि. कृष्णमाचार्यस्वामिनां च कृतज्ञता निवेद्यते ।

तिरुपतिः

एन्. एस्. रामानुजताताचार्यः

15-10-85

श्रीः ।

श्रीमते हयग्रीवाय नमः ।

तत्त्वचिन्तामणौ

# ॥ सत्प्रतिपक्षग्रन्थः ॥

सत्प्रतिपक्षत्वं न समानबलबोधितसाध्यविपर्ययलिंगत्वम्, परस्परप्रतिबन्धेनोभयोरबोधकत्वात्। बलंच न सपक्षसत्त्वादि, व्यतिरेकिण्यभावात् नापि समानव्याप्तिपक्षधर्मतावत्त्वं, विरोधेऽकत्र तद्भंगनियमात्.

---

गदाधरीयम् ।

"समानबले" त्यादि मू [लस्य] लं प्रकृतसाध्यानुमापकबलशालिन्यसति प्रकृतसाध्याभावानुमापकबलशालिहेत्वन्तरकत्व मित्यर्थ [र्थः] कम् ... ानुमापकत्वमनुमिति फलोपधायकत्व मनुमितियोग्यत्वं वा; आद्ये दूषण माह (परस्परेति) "उभयोरबोधकत्वा" दित्यस्य सत्प्रतिपक्षतादशाया ...मित्यादिः । द्वितीयपक्ष एतद्दोषानवकाशाद्बलपदार्थं वितर्क्य दूषयति (बलंचेति) बलपदार्थश्चेत्यर्थः । "सपक्षसत्त्वादी" त्यादिना ...पक्षसत्त्वविपक्षासत्त्वयोः परिग्रहः (व्यतिरेकिणीति) अभावात्– सपक्षाप्रसिद्ध्या तत्सत्त्वासम्भवात् । एतदुपलक्षणम्, सर्वत्रैव सत्प्रतिपक्षे ...हेतौ पक्षसत्त्वविपक्षासत्त्वयो रेकतराभावोपि द्रष्टव्यः । "समाने" ति ...तीतायातम्, बलपदार्थस्य समानत्वाघटितत्वात् । (विरोधेनेति) विरुद्ध ...ध्यतदभावव्याप्ययो रेकतरासत्त्वनियमेनेत्यर्थः. (तद्भंगेति) व्याप्तिपक्षधर्मतयो

नापि व्याप्तिपक्षधर्मतया ज्ञातत्वं, विरोधिव्याप्ति पक्षधर्मताविशिष्टज्ञानयोरन्यतरभ्रमत्वनियमेन नित्यत्व व्याप्यश्रावणत्वादि वैशिष्ट्या प्रसिद्ध्याऽऽरोपायितु मशक्य त्वात्.

नच- साध्यव्याप्यस्य पक्षधर्मता पक्षधर्मस्य वा साध्य व्याप्यताऽऽरोप्येति वाच्यं; एकत्र तदुभयाभावाद्विशिष्ट स्या प्रसिद्ध्या तद्वैशिष्ट्यस्यारोपासम्भवात् ।

## दीधितिः.

( एकत्र तदुभयेति ) व्याप्ये पक्षधर्मतायाः पक्षधर्मे च व्याप्यत्वस्यारोपः प्रत्येकमव्यापकः,

---

रेकतराभावेत्यर्थः । व्याप्तिपक्षधर्मतया- व्याप्तिसहितपक्षधर्मतया ज्ञातत्वम्- आरोप्यमाणत्वम् । व्याप्तिविशिष्टत्ववैशिष्ट्यज्ञानविषयपक्षकत्वमिति समुदिताथः । तेन " नित्यत्वव्याप्यश्रावणत्वादिवैशिष्ट्या सिद्ध्या " इत्यभिम मूलसङ्गतिः । ( नित्यत्वव्याप्येति ) शब्दो नित्यः कृतकत्वा दित्यादौ श्रावणत्वादिरूपा निर्हेतो र्बलस्य अगमकत्वाप्यत्वताज्ञानस्यारोप्याप्रसिद्ध्याऽसम्भवेन समानबलत्वासम्भवादित्यर्थः ।

यत्राव्याप्यः प्रतिहेतुः पक्षधर्म स्तत्र श्रावणत्वादा वन्यत्र प्रसिद्धाया व्याप्ते रारोप एव बलम्, यत्रापक्षधर्मः प्रतिहेतुः तत्र साध्यव्याप्ये पक्षधर्मत्वारोप एव बलमितिशङ्कायां विशिष्टाप्रसिद्ध्या व्याप्तिविशिष्टपक्षधर्मत्वारोपासम्भवाभिधान मसङ्गतम्, अत आशयं पूरयति दीधिती "व्याप्य" इत्यादिना । व्याप्ये- व्याप्तिविशिष्टे । पक्षधर्मे पक्षधर्मताविशिष्टे । प्रत्येकम्- व्याप्तिविशिष्ट स्वविषयकपक्षधर्मताज्ञानत्वादिना । अव्यापकः-

अतो विशिष्टस्यारोपो वाच्यः, स चैकधर्मिणि विरोधिव्याप्यद्वयविरहाद्विशिष्टस्याप्रसिद्ध्या न सम्भवतीत्यर्थः । विरुद्धादौ साधने स्वव्यापकसामानाधिकरण्यरूपव्याप्तेरप्रसिद्धेश्चेत्यपि द्रष्टव्यम् ।

---

सत्प्रतिपक्षासंग्राहकः । अव्याप्यादिहेतोर्व्याप्त्यादिविशिष्टस्याप्रसिद्धेरिति भावः । विशिष्टारोपः— व्याप्तिविशिष्टपक्षधर्मताया स्स्वस्मिन् ग्रहः । वाच्यः- वक्तव्यपदेन विवक्षणीयः । “ एकधर्मिणी ” त्यादिकं “ एकत्रे ” त्यादि मूलशब्दविवरणं (विशिष्टस्येति) यादृशसाध्यं पक्षे बाधितं तदीयव्याप्तिविशिष्ट प्रकृतपक्षवृत्तित्वस्य । (अप्रसिद्ध्या नसम्भवतीति) तथाच- नित्यत्व व्याप्तिविशिष्टश्रावणत्वाद्यप्रसिद्ध्या यथा व्याप्त्यादि विशिष्ट तद्धेतुधर्मिक पक्षधर्मत्वादि ग्रहो ऽप्रसिद्धः, तथा नित्यत्वादिव्याप्तिविशिष्टशब्दवृत्तित्वाद्यप्रसिद्ध्या श्रावणत्वादौ तद्ग्रहोऽप्यप्रसिद्धइति श्रावणत्वादे स्समानबलत्वासम्भवेन कृतकत्वादे स्सत्प्रतिपक्षत्वानुपपत्तेरिति भावः । व्याप्तिपक्षधर्मतोभयज्ञानविषयताया बलत्वे नैषदोष इत्यतो दोषान्तरं स्वयमाह ( विरुद्धादाविति ) आदिना साधारणपरिग्रहः । साध्याभाववदवृत्तित्वरूप व्याप्ते रन्यत्राप्रसिद्धाया विरुद्धादावारोपासम्भवात् ( स्वव्यापकेत्यादि ) ( अप्रसिद्धेश्चेति ) तज्ज्ञानघटितसमानबलत्वासम्भव इति शेषः । व्याप्तिप्रकारेण पक्षे स्वप्रकारकज्ञानविलक्षणे सामान्यादौ पक्षे हेतुतावच्छेदकसम्बन्धेन वृत्ते रप्रसिद्धि र्न क्षतिमावहतीति साऽप्रसिद्धिर्नोक्ता । व्याप्तिघटकानां खण्डशः प्रसिद्धतावत्पदार्थानां परस्परान्वयावगाहि ज्ञानस्य बलतया विवक्षणेनैतद्दोषोद्धारसम्भवेऽपि अन्वयव्यतिरेकव्याप्तिज्ञानयो रननुगमेन एकोपादाने अन्यव्याप्तेर्दुर्वारैवेति भावः । प्रकृतसाध्यानुमिति साध्यतावच्छेदकज्ञानविरोधिबुद्धिरिति समर्थनेनानुमितौ

नाप्यनिर्धारितविशेषबोधित साध्यविपर्ययत्वम्, उभयो रबोधकत्वात्. विशेषश्च न व्याप्तिभंगाभंगरूपः, एकत्र तद्भंगनियमात्.

( एकत्रतद्भङ्गेति ) तथाचान्यतरत्वेन तदवधारणमस्तीति भावः ।

सिद्धान्तलक्षणएव पर्यवसानम् । [ "अनिर्धारितविशेषे" ति मूलं अनिर्धा रितविशेषप्रकृत साध्यविरोधि बोधकलिङ्गत्वेसत्यनिर्द्धारितविशेष प्रकृतसाध्य बोधकत्वाविशिष्टलिङ्गत्वमित्यर्थकम् , बोधकत्वंच ज्ञायमानालिंगस्य कारणत्व मते यथाश्रुतमेव, अन्यथा जनकज्ञानविषयपरं बोधकपदम् । बोधकत्वञ्च यदि बोधोपधायकत्वं तदा ( उभयोरित्यादि ) स्वरूपयोग्यत्वंचे सदाह (विशेषश्चेति) " व्याप्तिभङ्गाभङ्गरूप " इतिमूलं व्याप्तिपक्षधर्मतामिति विषयत्व तद्भ्रमविषयत्वान्यतररूप इत्यर्थकम् । एकतरविषयकव्याप्ति पक्षधर्मताज्ञानस्य भ्रमत्वनियमेपि तदनवधारणेनाऽनिर्धारितविशेषत्व सम्भवात् " एकत्र तद्भङ्गनियमा " दिति दूषणमसङ्गतमित्यत आह ( तथाचेति ) तादृशभङ्गनियमेचेत्यर्थः । तदवधारणम्— भङ्गावधारणम् । अनयो रेकतरंवाध्यम् , विरुद्धार्थग्राहकत्वादित्यनुमानं सत्प्रतिपक्षित दशायामस्तीत्यर्थः ।

यद्यपि– " अनयो रेकतर " मित्यादेः- एकत्रपक्षे साध्यतदभाव व्याप्यतया हेतुद्वयज्ञानान्यतरद्भ्रमः- एकत्र मिथोविरुद्धद्वयसाधकज्ञानद्वया न्यतरत्वादित्यर्थो नसाधु , सद्धेतुपरामर्शे प्यन्यतरत्वरूपहेतुसत्त्वेन भ्रमत्व स्याभावेन व्यभिचारात् । नचैकपक्षकहेतुप्रतिहेतुपरामर्शान्यतरत्वं पक्षी कृत्य विरोधिसाधकद्वयवृत्तित्वेन भ्रमवृत्तित्वमेवानुमेयम् , तादृशान्यतरत्वा श्रय एकत्र भ्रमत्वमन्त्वेनैव तत्र भ्रमवृत्तित्वसत्त्वान्न व्यभिचारमसक्तिरिति वाच्यम् ; तथाप्यपि घटादिविषयकसमूहालम्बनरूपो यत्र विरोधिपरा

सत्प्रतिपक्षव्यवहारोहि सत्यसतिवा साधने नापरामृश्यमाने नाप्यविद्य
मानविरोधिपरामर्शे, अतएव सत्प्रतिपक्षो विरोधिव्याप्त्यादि मत्तया

---

मर्शं कृतत्र घटाद्यंशे भ्रमत्वमादायाऽर्थान्तर वारणाय तत्तद्धेतौ तत्तत्साध्य
व्याप्तिपक्षधर्मत्वान्यतरभ्रम [त्व] स्य निवेशनीयतया तद्धेतुद्वयान्तर्गत
सद्धेतौ तत्तत्साध्यादिव्याप्त्यादिभ्रमाप्रसिद्ध्या साध्याप्रसिद्धेः । तत्तद्धेतु
द्वयान्यतरत्वावच्छिन्नांशे तत्तत्साध्यव्याप्तिपक्षधर्मतान्यतरभ्रमवृत्तित्वसाधनेच
विरुद्धार्थसाधकान्यहेतुकपरामर्शद्वयान्यन्तरत्वे व्यभिचारः । साध्यप्रसिद्धि
मात्रेणैव कृतकृत्यताच । तथापि तत्तत्साध्यव्याप्त्यवच्छिन्नपक्षविषयता
निरूपितहेतुविषयताद्वयान्यतरत्वं पक्षीकृत्य भ्रमत्वनियतविषयतावृत्तित्वं
एकधर्मिकविरुद्धानुमितिजनकतावच्छेदक विषयताद्वयवृत्तित्वेन साधनीयम् ।
भ्रमत्वं चानुगतं कथञ्चि न्निर्वचनीयम् ।

"उच्यत" इत्यादिग्रन्थस्य दोषनिर्वचनपरत्वं नसम्भवति, "साध्य
विरोध्युपस्थापने" त्यादिज्ञानस्य ग्राह्याभावानवगाहितया ऽनुमित्यप्रति
बन्धकतया हेत्वाभासत्वासम्भवादिति सत्प्रतिपक्षव्यवहारविषयनिर्वचनपर
तया व्याख्यातुकामो व्यवहारविषय मवधारयति (सत्प्रतिपक्षेति) - (सत्य
सति वेति ,- समीचीने ऽसमीचीने चेत्यर्थः । तथाच सद्धेता वुक्तलक्षणस्य
दशाविशेषे ऽतिप्रसङ्गो न दूषणावह इति भावः (अपरामृश्यमान इति )
प्रकृतसाध्यसिद्ध्यौपयिकत्वविषयकपरामर्शदशानवच्छिन्न इत्यर्थः । एते
न साध्यसिद्ध्यौपयिकपरामर्शकालीनत्वरूपसमानबलवत्त्वनिवेशनसार्थक्यं
दर्शितम् । "असति गृहीताप्रामाण्यकेवा परामर्शे सत्प्रतिपक्षव्यवहारविरहा"
दित्यग्रिमग्रन्थ स्त्वसतीत्यस्य दृष्टान्तविधया प्रदर्शनेनागृहीतप्रामाण्य
कत्वांशमात्रनिवेशस्य व्यावृत्तिप्रदर्शनपर इति न पौनरुक्त्यम ( अविद्यमान
विरोधिपरामर्श इति ) विरोध्यनुमितियोग्यपरामर्श दशानवच्छिन्न इत्यर्थः ।
एतेन बलोपस्थितिप्रतिरुद्धकार्यकत्वांशनिवेशन प्रयोजनं दर्शितम् । ( अत

उच्यते. साध्यविरोध्युपस्थापनसमर्थसमानबलोपस्थित्या प्रतिरुद्धकार्यकलिंगत्वं तत्त्वम्. बलं व्याप्तिपक्षधर्मते.

परामृश्यमानो हेतुः विरोधिपरामर्शो वा यस्य परामृश्यमानस्य हेतोरसौ सत्प्रतिपक्षं इति विग्रहमपि वर्णयन्ति । अतस्तदनुसारेणैव व्यवहारौपयिकं लक्षणमाह ( साध्येति ) बाधाश्रयासिद्धिनिर्णयवारणाय समर्थान्तम् । नचासौ न व्याप्तिपक्षधर्मतात्मकं बलोपस्थितिरिति वाच्यम् । व्याप्तिपक्षधर्मताविरहस्य साध्यत्वे पक्षतावच्छेदकत्वे वा तत्सम्भवात् ।

---

एवेति ) प्रकृतपरामर्शस्य विरोधिपरामर्शस्य चासत्त्वदशायां सत्प्रतिपक्षव्यवहारविरहादेवेत्यर्थः । अतीतानागतप्रतिहेतुपरामर्शदशायामपि सत्प्रतिपक्षत्वात् स्वप्रतिपक्षादस्य हेतुपरतापक्ष परिहृत्य परामर्शपरतामाह ( विरोधिपरामर्शो वेति) (परामृश्यमानस्येति) यद्यप्यन्यपदार्थस्य परामृश्यमानत्वं न शब्दतो लभ्यते, तथापि प्रतिपक्षपदार्थेन फलोन्मुखस्वकार्यानुमितिरोधकपरतया परामृश्यमानस्वकार्यानुमितिविरोधिपरामर्शपरत्वात्फलितार्थविवरणमिदम् । " तदनुसारेण "– तादृशव्यवहारानुसारेण । (बाधाश्रयासिद्धीति) (निर्णयवारणायेति) तद्दशाया मतिव्याप्तिवारणायेत्यर्थः । तयोरपि साक्षादनुमिति प्रतिरोधकत्वादिति भावः । नचाश्रयासिद्ध्यादिनिर्णयस्यानुमितिप्रतिबन्धकत्वेपि तस्य परामर्शेनापि समं विरोधात् परामर्शकाले तत्समवधानं दुर्घटमिति वाच्यम् , लौकिकसन्निकर्षादेव तत्सम्भवात् । आश्रयासिद्धिपदं साध्याप्रसिद्धेरप्युपलक्षकम् । बलपदेनैव तद्वारणात् समर्थान्तवैयर्थ्य मित्याशङ्कां निराकरोति ( नचासा वित्यादिना ) असौ– बाधादिनिश्चयः ( व्याप्तीति ) धूमो वह्निव्याप्तिविशिष्टपर्वतवृत्तित्वाभाववान् पर्वतावृत्तित्वात् , तादृशाभाववान् धूमो गुणवान् द्रव्यत्वादित्यादौ धूमादौ वह्न्यादिव्याप्तिविशिष्टपक्षधर्मतानिश्चयरूपाबाधाश्रयासिद्धिनिर्णयस्य व्याप्तिपक्षधर्मता

पक्षस्तादृशव्याप्यवान् साध्यं पक्षवृत्तित्वाभाव व्याप्यवदितिपक्षस्य व्यापकभेदेनच अन्वयव्यतिरेकभेदेनच व्याप्तेश्च भिन्नत्वा देकोपादाने ऽन्यस्यासंग्रहेण बलस्याऽविवक्षितत्वाच ।

साध्यधीविरोध्यनुमितिजनक ज्ञानविषयत्वेन तदुपादाय तदुपस्थित्यभिधानञ्च शिरोवेष्टनेन नासिकास्पर्श मनुभावति । साध्यस्य साध्यसिद्धेः, विरोधिन्याः पक्षो न साध्यवानित्याद्युपस्थितेः,

---

त्पादकबलोपस्थितित्व सम्भवादित्यर्थः । ननु बलपदं प्रकृतसाध्याभावव्याप्ति विशिष्टप्रकृतपक्षधर्मतापरमिति नायं दोष, प्रकृते वह्न्यभावव्याप्तिविशिष्टपर्वतवृत्ति त्वाभावाभाव व्याप्तिविशिष्ट धूमवृत्तिताया एव बलत्वा दित्यत आह ( पक्ष इति) इतीत्यनन्तरं प्रतिरोधकज्ञानविषयस्येति शेषः । " पक्षस्य व्याप्तेश्च भिन्नत्वा " दित्यन्वयः । प्रथमे प्रकृतपक्षस्य द्वितीये प्रकृतसाध्यस्य पक्षतया पक्षभेदः । व्याप्ते र्भेदकद्वय माह ( व्यापकेत्यादि ) (व्यापकभेदेनेति) व्यापकयोः— साध्याभावपक्षवृत्तित्वाभावयोः, भेदेनेत्यर्थः ( अन्वयव्यतिरेक भेदेनेति ) एकस्याः व्यापकव्याप्तेरपि अन्वयव्यतिरेकरूपनिरूपकभेदेने त्यर्थः । अविवक्षितत्वात् विवक्षितु मशक्यत्वात । नन्वनुगतरूपेण दर्शित सकलव्याप्तिपक्षधर्मता निवेशे नायं दोष इत्यत आह ( साध्येति ) ( शिरो वेष्टनेनेति ) तादृशानुमितिजनकज्ञानत्वेन प्रतिरोधकाज्ञानस्यैव निवेशा त्तद्विषयविषयकत्वेन पुनस्तन्निवेशोऽनुचित इत्यर्थः । तथाच विरोध्युप स्थापनसमर्थत्वेनैवोपस्थितिर्निवेशो युक्तइतिभावः । उपस्थितेर्विरोधित्वञ्च प्रतिबन्धकत्वम , तच्च न साध्य निरूपितमिति साध्यपदं तदनुमितिपर तया व्याचष्टे ( साध्यस्येति ) " इत्याद्युपस्थिते " रित्यादिना साध्यं पक्षा वृत्तीत्याद्युपस्थितिपरिग्रहः । " उपस्थापने ' त्यत्र धात्वर्थोपस्थितौ विरो ध्यन्तस्य स्तोकनम्रत्यत्र नमने स्तोकस्येवाभेदान्वयः प्रयत्नेनोपपादः । एतदस्वरसेन साध्यपदस्य मुख्यार्थपरत्वानुरोधेनच कल्पान्तरमाह

साध्यविरोधी-साध्यवत्ताज्ञान प्रतिबन्धक ज्ञानविषयो बाधः सोऽयं साध्याभावादिमत्पक्षादिः-तदुपस्थितेर्वा, जननयोग्यया, समानया बलोपस्थित्या तथा विधव्याप्त्यादिबुद्धया, प्रतिरुद्धं कार्यं यस्य, तादृशलिङ्गत्वमित्यर्थः ।

---

( साध्यविरोधीति ) तद्वत्ताग्रहप्रतिबन्धकज्ञान विषयस्यैव विषयविरोधिरूपत्वात् "साध्यवत्ताज्ञान प्रतिबन्धकज्ञानविषय" इति विवरणसङ्गतिः । "साध्याभावादिमत्पक्षादि" रित्यादिना पक्षावृत्तिसाध्यादिपरिग्रहः । एतच्च फलितकथनम् ( तदुपस्थितेरिति ) तादृशपक्षादेः कर्मतयोपस्थिति क्रियाया मन्वयो युक्तएवेति भावः । अथैवं पक्षे साध्यवति साध्याभाववत्पक्षादे रप्रसिद्धया प्रतिरुद्धहेता वव्याप्तिरिति चेन्न; यद्रूपावच्छिन्ने धर्मिणि यद्रूपावच्छिन्नवत्ताज्ञानं पक्षतावच्छेदकावच्छिन्ने साध्यतावच्छेदकावच्छिन्नवत्ताज्ञानप्रतिबन्धकं तद्रूपावच्छिन्ने पक्षे तद्रूपावच्छिन्नसाध्यकानुमितिजननयोग्योपस्थितिप्रतिरुद्धकार्यकत्वविवक्षणात् ।

केचित्तु- यत्र बाधो दोषः तत्रैव सत्प्रतिपक्षो दोषः प्रतिहेतुपरामर्शसंवलनदशायां तत्रैव हेतौ सत्प्रतिपक्षव्यवहारो यथार्थइत्याशयेनैवैतत्कल्पानुसरणम् । तथा च साध्यवत्पक्षक हेतो रलक्ष्यतया न तत्राव्याप्ति रित्याहुः ।

एतच्च यथाश्रुतार्थविवरणम् । वस्तुत स्साध्यवत्ताज्ञान प्रतिबन्धकज्ञानत्वेनोपस्थिति र्लक्षणे निवेश्या, तादृशज्ञानविषयविषयकत्वेन तन्निवेशनस्य शिरोवेष्टनेनेत्यादिन्यायेन हेयत्वात् । साध्यादिपक्षक साध्यतावच्छेदकाद्यभावव्याप्यवत्तापरामर्शवारणाय विशिष्टसाध्यादिमत्ता ग्रहाविरोधित्वेनाप्युपस्थिति र्विशेष्या । ( जननयोग्ययेति ) जननं स्वपुरुषार्थः । योग्यत्वञ्च समर्थपदार्थः । बले समानत्वं न विशेषणम् , तस्याऽविवक्षितत्वात् , अधिकोपस्थितावेवेति स्फुटीकर्तुं "समानयेत्य" समासेन लिखनम् । "तथाविधव्याप्त्यादिबुद्ध्या" साध्याभाव व्याप्यत्वादिबुद्धया । एतदत्र

विरोधिव्याप्त्यादिविषयत्वलक्षण योग्यताशालिन्या अप्युपस्थिते रप्रामाण्यग्रहे सत्प्रतिपक्षत्वासम्पादकत्वात्

---

साध्याभाव व्याप्त्यादिबुद्ध्या । एतदपि वस्तुकथनम् । तया प्रतिरुद्धत्वञ्च तत्प्रयुक्तानुत्पत्तिप्रतियोगित्वम् । वह्निव्याप्याभावादि साध्यकस्थले वह्न्या दिग तरक्षविषयकानुमिति जननयोग्यया वह्निव्याप्यवत्पक्षोपस्थित्या बाधनि श्चयरूपया कार्यप्रतिरोधदशायां अतिव्याप्तिवारणाय साध्यवत्ता ज्ञान प्रतिबन्ध कत्वं प्रथमोपस्थितिविशेषणम् । वह्निव्याप्यवत्पक्षोपस्थितेरपि साध्यवत्ता ज्ञान प्रतिबन्धिकां वह्न्यभावादिमत्पक्षविषयक समूहालम्बनरूप वह्न्यादिम त्पक्षविषयकानुमितिं प्रति स्वरूपयोग्यतया यत्र श्रुते उक्तातिव्याप्ते दुर्वार- तया साध्यवत्ता ज्ञान प्रतिबन्धकतावच्छेदक विषयित्वावच्छिन्नानुमितिनिष्ठ कार्यता निरूपित कारणताश्रयत्वपर्यन्तं समर्थं तेन विवक्षणीयम् । नच साध्यवत्ता ज्ञान प्रतिबन्धकतावच्छेदिका साध्याभावादिप्रकारिता, तद्विषय तैव च प्रातिहेतुपरामर्श जन्यतावच्छेदिकेति तज्जन्यताया न प्रतिबन्धकताव च्छेदक विषयत्वावच्छिन्नत्व मित्युक्तविवक्षणासम्भव इति वाच्यम् । प्रकारताविशेषस्यैव विधेयतारूपत्वात् । अन्यथातु यदवच्छिन्नविशेष्यक यदवच्छिन्नप्रकारकत्वं प्रतिबन्धकतावच्छेदकं तदवच्छिन्नपक्षक तदवच्छिन्न विधेयत्वावच्छिन्न निरूपितकारणत्वमेव निवेश्यम् । ननु तादृशोपस्थिति- कालीन ज्ञानविषयत्वमव सम्यक्, किं तत्प्रतिरुद्धकार्यक ज्ञानविषयत्वपर्यन्त निवेशनेन इत्याकांक्षायामाह ( विरोधित्यादि ) अप्रामाण्यग्रह विशिष्टबा ध्याप्त्याद्युपस्थिते र्न विरोध्यनुमिते योग्यत्वम्, तद्ग्रहाभावविशिष्टत्वेनैव परामर्शस्यानुमितियोग्यत्वादिति नेदृशोपस्थिति मादाय ऽतिव्याप्तिप्रसक्ति रित्याशङ्कां निराकरोति ( विरोधिव्याप्त्यादि विषयत्वलक्षणयोग्यता शा- लिन्या इति) तथाच जनकतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वरूपयोग्यता

कार्यप्रतिरोधानुधावनम्। समानत्वं चाऽगृहीताप्रामाण्यक साध्य.सि-द्ध्यौप.यक परामर्शकालीनत्वम्,

---

नात्रं विव.क्षिता, किन्तु जनकत.वच्छेदक कोटप्र.विष्ट .विषयत.रूपैवेति भ.वः। अथवा अप्रामाण्यग्रह.भ.वो नानु.मितिजनकत.वच्छेदकः, अ.पितु स्वातन्त्र्येण जनक एवेत्यभिप्र.येणैतत्। (क.र्यप्र.तिरे धानुधावनमि.ति) तथाच.ऽप्र.माण्यग्रह भ.वविशिष्ट विरोधिपरामर्शस्यैव अनु.मि.तिप्रतिबन्धकतया गृहीताप्रामाण्यक विरो.धिपर.मर्शस्य कार्याप्रतिब.धकत्वान्नोक्त.थलेऽति प्रसङ्गः।

यद्यप्यप्राम.ण्यज्ञानास्क.न्दित विरोधिपरामर्शस्य ऽगृहीताप्र.माण्यक बाधादिबु.द्धिरूपत्वे तत्प्रतिरुद्धकार्यकत्वमपि दुर्वारमिति यथा श्रुतेऽ.तिव्याप्ति रस्त्येव ; तथ.पि विरोध्यनुमिति जनकत.वच्छेदकरूपस्य कार्यप्रतिरोध प्रयो.जकतावच्छेदकत्व विवक्षणेनाऽ.तिव्या प्तिर्वारणी.या। नच यत्र विरे.धि परामर्शानन्तरक्षणे त.द्विषयक.प्र.म.ण्यग्रहो जायते तत्र पूर्वक्षणे अप्र.म.ण्यग्रहाँ भाव वि.शिष्ट तज्ज्ञ.नरूप प्रतिबन्धक सत्त्वेन कार्यानुत्पत्त्य. तत्क्षणे सत्प्र.ति पक्षत्वं दुर्वारमेवेति वाच्यम्। यत्कालीनोप.स्थित्या अ.ग्रिमक्षणे यस्य कार्या-नुत्प.दः स तदा सत्प्रतिपक्ष इति विवक्षणेन.तिप्रसङ्गानवकाश.त्।

उपाध्यायमतर.त्या समानपदं स.र्थकयितुं तदर्थमाह-(समानत्वञ्चेति) (अगृहीताप्रामाण्यकेति) स्व.विषयकाप्र.म.ण्यग्रह.भाव विशिष्टेत्यर्थः। साध्यसिद्ध्यौप.यिकत्वम्-प्रकृतसाध्य.नु.मि.तियो.ग्यत्वम्, योग्यत्वञ्च अप्रामा-ण्यज्ञ.नास्कन्दितस्यापि पर.मर्शस्य, अप्राम.ण्यग्रह.भावस्य तत्सहका.रित्वा-दि.ति नाऽगृहीताप्रामाण्यकत्ववैयर्थ्यम्।

अथ-अगृहीताप्र.माण्यकत्वशरीरे अन्वयव्य.प्त्यंशे व्य.तिरेकव्या प्त्यंशे च पृथगप्राम.ण्यग्रह.भाव वि.शिष्टत्वं निवेशनीयम्, तत्तद्व्याप्त्यंशे

असति गृहीतप्रामाण्यके वा परामर्शे सत्प्रतिपक्षत्वव्यवहारविरहात् ।

---

अप्रामाण्यग्रह सत्त्वे तत्तद्व्याप्यत्वावगाहि परामर्शस्य सत्प्रतिपक्षत्वप्रयोजकत्वात् । तथा चान्यतरव्याप्तौ रेकतरविषयक परामर्शदशायां अन्यतरव्याप्यंशे अप्रामाण्यग्रहसत्त्वे सत्प्रतिपक्षता न स्यात् । नच स्वयोग्यकानुमिति विरोधिग्रहत्वेनाऽप्रामाण्यग्रहद्वयमनुगमय्य तदभाव विशिष्टत्वं निवेशनीयम्; विरोधित्वञ्च समानविशेष्यकत्वावच्छिन्नं ग्राह्यम्, तेन विरोधिपरामर्शादिव्यावृत्तिरिति वाच्यम्; एवं सति तादृशव्याप्तिद्वयविषयक समूहालम्बनपरामर्शे एकतरांशे अप्रामाण्यग्रहसत्त्वे सत्प्रतिपक्षत्वानुपपत्तेरिति चेन्न;- स्वीययत्किञ्चिद्विषयताप्रयोज्यानुमिति विरोधिज्ञानसामान्याभावस्य निवेशनीयत्वात् । विरोधित्वञ्च विरोधिपरामर्शादिव्यावृत्तं ग्राह्यम् । समूहालम्बनपरामर्शस्थले यादृशव्याप्त्यंशे अप्रामाण्यज्ञानं नास्ति, तादृशव्याप्तिविषयताप्रयोज्यानुमिति विरोधिज्ञानसामान्याभावस्य सत्त्वात् न तत्र सत्प्रतिपक्षत्वानुपपत्तिः ।

"असति"- अविद्यमाने । "परामर्शे" - स्वविषयकपरामर्शे । "सत्प्रतिपक्षत्वव्यवहारविरहात्"-स्वनाश्य सत्प्रतिपक्षत्वव्यवहारविरहात् । नचासति गृहीतप्रामाण्यकेवा प्रकृतसाध्यानुमापकपरामर्शे अप्रामाण्यज्ञानाभाव सहकृतपरामर्शरूप कारणविरहादेवानुमिति विरहः, नतु विरोधिपरामर्श प्रयुक्त इति समानत्वानिवेशेपि नातिप्रसङ्गावकाश इति वाच्यम्; तत्र, उभयोरेव कारणाभावतया विनिगमनाविरहेण कार्याभावप्रयोजकताया दुर्वारत्वात्। विरोधिपरामर्शमात्रप्रयुक्तत्वस्य प्रयोजनविरहेणानिवेशयत्वात् । यत्र विरोधिपरामर्शो बाधनिश्चयश्च वर्तते तत्रापि सत्प्रतिपक्षितत्वमेष्टव्यत्वात् ।

2

प्रामाण्य ग्रहस्याबलत्वात् । अन्यत्राऽप्रामाण्यग्रहानुकूलत्वेनैव क्वचित्तदुपयोगात् । बलपदोपसन्दानाच्चोक्तरूप लाभान्न तद्वैयर्थ्यम् । लिङ्गपदोपादानाच्च स्वीयलिङ्गतौपयिकपरामर्श लाभादात्मादेर्व्युदासः । विरोधि-

---

उक्तस्थले विरोध्यनुमित्युत्पत्तौ तत्र प्रकृतसाध्यानुमापक परामर्शाभाव रूप-कारणस्य व्यभिचारप्रसङ्गेने त्यर्थः । " अबलत्वात् "- प्रकृतपरामर्शे अप्रामाण्यग्रह मन्तरेण उक्तस्थलेऽनुमित्यनुपधायकत्वात् । तथा च सत्प्रतिपक्षत्वमिष्टमेव । अथवा- " व्यभिचारेण "- तज्जनकज्ञानं प्रामाण्यनिश्चयं विनाप्यनुमित्युत्पत्त्या, जनकज्ञाने प्रामाण्यग्रहस्य, " अबलत्वात् "- अनुमितिसामग्र्यघटकत्वात् । तथाच यत्र प्रकृतपरामर्शे न प्रामाण्यग्रहः, किन्तु विरोधिपरामर्श एव, तत्रापि प्रकृतपरामर्शे अप्रामाण्यग्रहसत्त्वे कोटिद्वयानुमितिसामग्र्या अक्षतत्वा त्परस्परविरोधेन नैकस्याप्यनुमितिरिति सत्प्रतिपक्षत्व मिष्टमेवेति भावः । नन्वेकत्र प्रामाण्यग्रहदशाया मेककोट्यनुमिते राव-श्यकतया तस्य बलत्व मावश्यकमित्यत आह (अन्यत्रेति) परामर्शान्तर इत्यर्थः । " तदुपयोगात् "- प्रामाण्यग्रहस्या नुमित्युपपादकत्वात् । बल-पदस्याऽ विवक्षितार्थकत्वेपि समानपदस्य निरुक्तार्थतात्पर्यग्राहकतया बलप-दोपादानं सार्थकयति (बलपदेति) लिङ्गपदोपादानवैयर्थ्यशङ्कां परिहरति (लिङ्गपदेति) (स्वीयलिङ्गतौपयिकेति) स्वनिष्ठप्रकृतसाध्या नुमापकता-वच्छेदकविषयता विशेषरूपगमकतानिर्वाहके त्यर्थः (आत्मादेरिति) अ-न्यथा तस्यापि धूमलिङ्गकवह्न्यनुमित्यौपयिक परामर्शकालीन वह्न्यभावानुमापकपरामर्श प्रतिरुद्धवह्न्यनुमित्यात्मक कार्यकत्वेन धूमादेरिव सत्प्रतिपक्ष-त्वापत्तिरिति भावः । नच प्रतिरुद्धकार्यत्वम्, प्रतिरुद्धकार्यक — परामर्शविषयत्वम्, तच्च नात्मादेरिति नातिप्रसङ्गशङ्केति वाच्यम्; आत्मादेरपि प्रतिरुद्धकार्यक समूहालम्बनपरामर्शविषयत्व सम्भवात् । प्रतिरुद्धकार्यक मित्यनेन प्रतिरुद्धकार्यक परामर्शविषयत्व मवश्य-

परामर्श प्रतिरुद्धकार्यकविशिष्टपरामर्शविषयत्वन्तु फलितार्थः । अगृहीताप्रामाण्यकत्व संवलितयोग्यतोपादानेतु बाधोपस्थितिसमर्थपरामर्श कालीनसाध्यसिद्धिसमर्थपरामर्श विषयत्वम्, तत्त्वम् वाच्यम् । यदिच यं वह्निव्याप्यवान्-वह्न्यभावव्याप्यव्याप्यवांश्चेति परामर्शादयं वह्निमान्वह्न्यभाव व्याप्यवांश्चेत्यनुमितिः प्रामाणिकी , नतु

---

मेव विवक्षणीयम्, अनुमितेः हेतुकार्यत्वासम्भवात्; तथाचः तादृशविषयतायां प्रकृतानुमितिजनकतावच्छेदकत्व निवेशेनैवोपपत्तेः विरोधिपरामर्शे स्वनिष्ठप्रकृतानुमितिजनकतावच्छेदक विषयिताक परामर्शकालीनत्व निवेशन मनुचितमित्याशयेन तथैव निष्कृष्टार्थ माह (विरोधिपरामर्शेति) प्रकृतानुमिति विरोध्यनुमितियोग्यपरामर्श प्रयुक्ताग्रिमक्षणावच्छिन्नानुत्पादप्रतियोगि प्रकृतानुमितिजनकतावच्छेदकीभूत परामर्शीयविषयताविशेषविशिष्टत्व मित्यर्थः । अगृहीताप्रामाण्यक परामर्शत्वेनानुमितिजनकतामते जनकतावच्छेदकता पर्याप्त्यधिकरण धर्मवत्त्व रूपयोग्यता न गृहीताप्रामाण्यकपरामर्शस्येति कार्यप्रतिरोध निवेशमन्तरेणैवोपपत्त्या तं परित्यजति ( अगृहीताप्रामाण्यकेति ) ( बाधोपस्थिति समर्थेति) साध्यवत्ताज्ञान प्रतिबन्धकत्वेनेति तत्प्रतिबद्ध्या यानुमितिस्तद्योगेत्यर्थः । साध्यवत्ताधीप्रतिबध्यत्वनिवेशात्साध्याभावव्याप्यानुमिति समर्थपरामर्शकाले नातिप्रसङ्गः । तत्कालीनत्वं . चैककालावच्छिन्नैकात्मवृत्तित्व सम्बन्धेन तद्विशिष्टत्वम्, तेन व्यधिकरण परामर्शमादायनातिप्रसङ्गः ( यदि चायमिति ) " अनुमितिः प्रामाणिकी " त्यत्र " नच सत्प्रतिपक्षत्व " मित्यत्रच ' यदिच ' इत्यस्य सम्बन्धः । तदभावव्याप्यवत्ता निश्चयानन्तरमिव तादृशनिश्चयक्षणेपि नानुमितिर्जायते, तादृशनिश्चयस्य बाधनिश्चयवत्स्योत्पत्तिक्षणेपि कार्योत्पत्तिविरोधित्वात् । तत्रानुमितेः प्रामाणिकत्वे तादृशानुमित्युत्पादक्षणे सत्प्रतिपक्षतायामपि न क्षतिः. तदग्रिमक्षणे विरोधिपरामर्शवत्ता सदनुमिति

सत्प्रतिपक्षत्वम्, तदा कार्यप्रतिरोधोऽवश्यमुपादेयः । अजनितविरोधिबोधत्वेन च विरोधिपरामर्शो विशेषणीयः । अत एवाग्रिमलक्षणे 'विरोधिबोधकान्ये' ति फलतो ज्ञानविशेषणम् । एकस्याप्रामाण्यग्रहेणाऽपरेणानुमितिजनना सद्वारणाय वा । तत्प्रतिरुद्धकार्यत्वञ्च

---

प्रतिरोधादित्युभयत्र विवादप्रदर्शनार्थं तदभिधानम् । ( कार्यप्रतिरोधोऽवश्यमुपादेय इति ) स्वातन्त्र्येण प्रकृतसाध्यसिद्ध्यौपयिक परामर्शे स्वजन्यकार्याभाव विशिष्टत्वरूपं प्रतिरुद्ध कार्यकत्वम्, अगृहीतप्रामाण्यकत्वेनानुमितिहेतुतामतेऽपि निवेश्यमित्यर्थः ( अजनित विरोधिबोधत्वेनेति ) स्वजन्यविरोध्यनुमित्यभाव विशिष्टत्वेनेत्यर्थः ( विशेषणीय इति ) तेन तत्रैव विरोधिवह्निसाध्यक परामर्शेन वह्न्यभावसाध्यक हेतोर्न सत्प्रतिपक्षितत्वमिति शेषः । 'अतएव'- उक्तस्थले वह्न्यभावसाध्यक हेतोस्सत्प्रतिपक्षितत्ववारणादेव ( विरोधिबोधकान्येति ) निरुक्तार्थकमिति शेषः । यथाश्रुतशब्दतो गमकतौपयिकरूपे विरोधिबोधकान्यत्वं लभ्यते, नतु ज्ञायमानपदोपस्थाप्य ज्ञाने, तथा विवक्षणेच यादृशव्याप्त्यादिमत्तया ज्ञानेन प्रकृतसाध्यक परामर्शशून्य पुरुषान्तरस्य विरोध्यनुमिति र्जनिता प्रकृतसाध्यकपरामर्श समवहित तादृशव्याप्त्यादिविषयक ज्ञानान्तरस्यापि सत्प्रतिपक्षितत्व प्रयोजकत्वानुपपत्तिः, अतः ( फलतो ज्ञानविशेषणमिति ) उक्तानुमिते रप्रामाणिकत्वेऽपि तदानीं सत्प्रतिपक्षतोपगमेऽपिवा अग्रिमलक्षणे विरोधिबोधकान्यत्वस्य नोक्तव्यावृत्तिसङ्गतिः, अत स्तन्मते व्यावृत्त्यन्तरमाह । ( एकस्येति ) "तद्वारणाय"- अनुमित्युपधायक परामर्शस्य सत्प्रतिपक्षितत्व प्रयोजकतावारणाय । तद्विरोधिबोधकान्यत्वं स्वजन्यविरोधिबोधाव्यवहित प्राक्क्षणविशिष्टं यत्तदन्यत्वार्थकम्, स्वनिष्ठतादृशक्षण वैशिष्ट्यशून्यत्वार्थकं वा । नन्वेवमपि यत्र प्रतिहेतुपरामर्शो विद्यते नतु प्रकृतहेतुपरामर्शः, अन्यत एव कुतश्चित्प्रतिबन्धकान्न तदग्रिमक्षणे विरोध्यनुमितिः,

विरोधिबोधकान्य गमकतौपयिक रूपसंपत्तिमत्तया ज्ञायमानेन प्रतिरुद्धकार्यत्वंवा तत्त्वं । स्थापनायांव्याप्ति पक्षधर्मत्व मुभयवादिसिद्धम् , वादिना तदभावानुपन्यासात । द्वितीयस्य तत्त्वमन्यतरासिद्धमिति प्रथमेन द्वितीयं बाधितमिति, स्वार्थानुमानएवायं दोष इत्येके; तन्न-एकदा

---

प्रतिरुद्धकार्यक परामर्शविषयत्वम् । ( एकदेत्यादि )

---

तदग्रिमक्षणेऽतिप्रसङ्गो दुर्वार एवेत्यत आह ( प्रतिरुद्धेति ) तथाच तत्र प्रकृत हेतौ विशेषणीभूत परामर्शविषयत्वाभावा न्नातिप्रसङ्ग इति भावः ।

नचैवमपि यत्र प्रकृतहेतुपरामर्शो गृहीताप्रामाण्यकः प्रतिहेतुपरामर्शश्चाऽगृहीताप्रामाण्यको वर्तते, प्रतिबन्धकान्तर वशाच्चाग्रिमक्षणे विरोध्यनुमित्यनुत्पादः, तत्रातिप्रसङ्गो दुर्वार एव ; प्रकृतहेतुपरामर्शे गृहीताप्रामाण्यकत्वस्य तन्नियतसाध्य सिद्धियोग्यताया वा निवेशे प्रतिहेतुपरामर्श विरोधिबोधकान्यत्वस्य वैयर्थ्यमिति वाच्यम् । एतन्निवेशलाभायैवं विरोधिबोधकान्यत्वस्योपादानात् ।

वस्तुतस्तु विरोधिबोधकान्यत्वम्, प्रकृतहेतुपरामर्श प्रतिरुद्धकार्यकत्व रूपं प्रतिहेतुपरामर्श विशेषणम्, गृहीताप्रामाण्यक प्रकृतहेतुपरामर्शश्च न प्रतिहेतुपरामर्शकार्य प्रतिरोध इति तादृशपरामर्शदशायां नातिप्रसङ्गः ।

मूले " एकदे " त्यस्य उत्पन्नयो रीति शेषः । अविरळक्रमेणोत्पन्नयो रित्यर्थकं " निरन्तरयोर्वे "। नि मुक्त्माक्षिप-

निरन्तरयोर्वोभयो र्व्याप्तिपक्षधर्मतया ज्ञातयोः प्रतिपक्षत्वा त् युगपदुपस्थितेश्च कारणवशेन स्वपरसाधारणत्वात् ।

---

नच द्वितीयस्य परामर्शस्योत्पाद समये पूर्वेणानुमितिजननात् कथं नैरन्तर्यमिति वाच्यम्, साधकमानादिवशेन क्षणमनुमित्यनुत्पादसम्भवात् । ( स्वपरेति ) अयम्भावः — न खलु सम्भवन्तस्सर्व एव हेत्वाभासा स्समुद्भाव्याः, आधिक्यप्रसङ्गात् । परन्तु यथाकाम मेकः । तथाच प्रतिपक्षोद्भावनेपि नाप्रतिषेधमात्रेण व्याप्त्याद्यभ्युपगम इति ।

---

ति ( नचेत्यादिना ) साधकमानम्-साध्यनिश्चयः । विरोधिपरामर्शानन्तर मपि यदि साधकमानादि वशेनाऽनुमिति र्नजायते तदा तदनुरोधेन सत्प्रति पक्षस्य दोषता नायातीत्यतः ( क्षणमिति ) क्षण मेक मित्यर्थः । मूले- "ज्ञातयोः"- ज्ञानयोः । " प्रतिपक्षत्वात् "-परस्परकार्यप्रतिरोधकत्वात् । ( युगपदिति ) यौगपद्यमेककालवृत्तित्वम्, नतूत्पत्तिघटितम्, द्वितीयपक्षा संग्राहकत्वात् ।

परामर्शद्वयसंवलनस्य स्वपरसाधारणत्वेपि परामर्शस्थले व्याप्तिपक्षधर्म भङ्ग मुपेक्ष्य सत्प्रतिपक्षोद्भावने ऽप्रतिषिद्धत्वेन प्रकृतहेतो र्व्याप्तिपक्षधर्म ोः प्रतिवाद्यनुमतत्व ग्रहणेन प्रमितत्वग्रहणान्न द्वयो स्तुल्यबलत्व मित्या- ानुद्धाराद्भावं पूरयति दीधितौ ( अयं भाव इति ) ( आधिक्यप्रसङ्गा- दिति ) हेतुद्वयप्रयोग इव दोषद्वयोद्भावनेऽप्याधिक्यादिति भावः । " यथाकाम " मित्यनेनोद्भावने विनिगमनाविरहशङ्का निरस्ता । " व्याप्त्याद्यभ्युपगमः "- व्याप्त्यादेः प्रतिवाद्यनुमतत्वसिद्धिः । अप्रतिषि द्धत्वस्याभावानुद्भावनरूपस्यान्यथासिद्धतयाऽनुमित्यनाक्षेपकत्वादिति भावः ।

अथ वस्तुनोऽद्वयात्मकत्वेन व्याप्तिपक्षधर्मताभंग एकत्रावश्यक इति स एव दोषः। नच तयो र्विरोधभंगेऽप्युपपत्ते र्नव्याप्त्यादिभंग नियम इति वाच्यम्। अविरोधेऽनुमित्यप्रतिरोधात्, विरोधेव्याप्तिभंगनियमादितिचेन्न;

---

( प्रतिरुद्धत्वेति ) प्रतिरोधप्रयोजकविरोधिव्याप्त्यादीत्यर्थः।

---

मूले ( अद्वयात्मकत्वेनेति ) साध्यतदभावयोरेकतरवत्त्वे परानधिकरणत्वनियमेनेत्यर्थः ( व्याप्तीति ) एकत्र—हेत्वोरन्यतरत्र। स्वस्वसाध्यनिरूपितव्याप्तिपक्षधर्मतयोरन्यतरभङ्ग आवश्यक इति स एवान्यतरत्वेनोभयत्राव धारितो, विशिष्य सन्दिग्धो दोष आस्तां, किं प्रकरणसमस्य दोषतयेत्यर्थः। साध्यतदभावव्याप्ययोरेकधर्मिणि सत्त्वमनुपपन्नं धर्मिवृत्त्यावेकतरव्याप्यभङ्गं तदा कल्पयति, यदि व्याप्त्यभावं विना तन्नोपपद्यत इत्यवधारयितुं शक्यते, तदेव न, उभयत्र व्याप्तिसत्त्वेपि साध्यतदभावौ यद्यविरुद्धौ स्वतां, तदोभयत्र पक्षधर्मता निर्वहेदिति प्रतिसन्धानेन तद्विघटनादिति. सामान्यतोपि न व्याप्त्यादिभङ्गवधारणमिति कथमज्ञायमानस्य दोषतेत्याशङ्कते ( नच तयोरिति ) साध्यतदभावयोरविरोधग्रहदशायां अनुमित्यप्रतिरोधान्न सत्प्रतिपक्षता, अपितु विरोधावधारणदशायामेव, तथाचोक्तान्यथासिद्धिसम्भावनाविरहादनुपपत्त्यवधारणं न दुर्घटमित्याशयेनाह ( अविरोध इति )

प्रतिरुद्धत्वस्य कार्यानुत्पादस्यादोषतया "प्रतिरुद्धत्वे" त्यादि यथाश्रुतमूलासङ्गतिः। अतो व्याचष्टे ( प्रतिरुद्धत्वेतीति ) एकत्र धर्मिणि मिथो विरुद्धयोस्साध्यतदभावव्याप्ययोर्व्याप्यत्वेन ज्ञानं यदि निश्चयरूपं स्यात्तदा परस्परप्रतिबन्धेन नोत्पद्यत एव, अतो व्याप्त्यंशे पक्षधर्मतांशे वा संशयरूपमेव तत्, तथाच कारणीभूतनिश्चयाभावादेव नानुमित्युत्पादः, नतु

प्रतिरुद्धत्वज्ञानानन्तरं व्याप्त्यादिभंगज्ञानं मित्युपजीव्य-त्वेन व्यभिचारवदस्यापि दोषत्वात् । ननु साध्यतदभाव-योरिव तद्व्याप्यत्वेनावधारितयो र्विरोधादेकत्र नानिश्च-यः, किंतु संशयः, निश्चयेत्वान्यतरव्याप्तिसंशय इति व्याप्यत्वासिद्धिरिति चेन्न;- उभयोरेकत्र निश्चयानन्तर मन्यतरव्याप्तिसंशय इत्युपजीव्यत्वेनास्य भिन्नत्वात् ॥

---

( उभयोरिति ) परस्पराभावव्याप्यत्वं हि हेत्वोर्विरोधः । तदग्रहे च तयोरेकत्र निर्णयो न विरुद्धयत इति भावः ( दूषकतेति ).

---

सत्प्रतिपक्षभावादित्याक्षेपे " उभयोरेकत्र निश्चयानन्तर " मित्यादिना विरोधिद्वयव्याप्यवत्तानिश्चयस्य व्याप्त्यादिसंशयोपजीव्यत्वाभिधानं न सङ्ग-च्छते; तादृशनिश्चयस्यैवानुपपादितत्वात् अतो भावमाह ( परस्परेति ) साध्यतदभावव्याप्यत्वं हि हेत्वोस्साध्याभावसाध्ययोरेव विरोधः, नतु परस्परं तयोः, परस्परविरुद्धत्वेन ज्ञातयोरेव नैकदा निश्चय इति तदग्रहे परस्परव्यापकविरुद्धत्वेन ग्रहेपि हेत्वोरेकत्र निश्चयः सम्भवत्येवेत्यर्थः । " दूषकता-बीज " मित्यादिग्रन्थस्य दूषकत्वं निग्रहप्रयोजकत्वं दुष्टत्वमिति यावदित्ये तादृशार्थपर्यालोचनया विरोधिपरामर्शप्रतिबन्धेनानुमित्यजनकत्वं सत्प्रतिपक्ष-स्थले हेतोर्दुष्टताप्रयोजकं, नतु निर्णयाजनकत्वमात्रं, विरोधिपरामर्शशून्यता दशायामपि कारणविरहेणानुमित्यजनकतया सद्धेतोर्दुष्टतापत्तेः; नापि विरोधि परामर्शज्ञाप्यमानो व्याप्तिपक्षधर्मताविरहः, सद्धेतौ तदसत्त्वेन विरोधिपरामर्श संवलनदशायामपि तस्य दुष्टतानुपपत्तेः ; विरोधिपरामर्शप्रयुक्तव्याप्तिभङ्ग-ज्ञानं असाधारणं वा सद्धेतुसाधारणदुष्टताप्रयोजकमित्यत्वोऽनित्यदोष-

दूषकताबीजं समानबल [विरोधि] सामग्रीप्रतिबन्धेन निर्णयाजनकत्वम्, नतु व्याप्तिपक्षधर्मताविरह एव, सद्धेतावपि

विरोधिपरामर्शसत्त्वे नियमेन परामर्शान्तरादनुमित्यनुत्पादस्तस्यानुमिति विरोधित्वं कल्पयति, नतु तेन ज्ञाप्यमानस्य व्याप्त्यादिविरहस्य, सद्धेतावपि तस्यानुमितिविरोधित्वादित्यर्थः ।

नम्युपगन्तृमते न सम्भवतीति तमन्यथा व्याचष्टे ( विरोधीत्यादिना ) "समानबल [विरोधि] सामग्रीप्रतिबन्धेन निर्णयाजनकत्व" मिति मूलं सामग्री पदं विरोधिपरामर्शपरम् , प्रतिबन्धपदं नियमपरं, विशेषणे तृतीया । निर्णयाजनकत्वम् - अनुमित्यनुत्पादः , तथाच विरोधिपरामर्शनियतोऽनुमित्यनुत्पाद इति समुदायार्थः ; नियमश्च- व्यापकत्वमित्याशयेन विरोधिपरामर्शसत्त्वे नियमेनानुमित्यनुत्पाद इति व्याख्यातम् । तस्य- विरोधिपरामर्शस्य ! ( विरोधित्वं कल्पयतीति ) एवञ्च दूषकतापदं विरोधिपरामर्शनिष्ठप्रतिबन्धकतापरम् , बीजपदञ्च कल्पकार्थकं बोध्यम् ।

मूले ( न तु व्याप्तिपक्षधर्मताविरह इति ) अत्र " दूषकताबीज" मित्यस्य अनुषङ्गेण व्याप्तिपक्षधर्मताविरहो न दूषकताबीजमित्यर्थो लभ्यते, सचासङ्गतः, व्याप्तिपक्षधर्मताविरहस्य विरोधिपरामर्शप्रतिबन्धकताकल्पकत्व रूपदूषकताबीजत्वाप्रसक्तेः, अतो "व्याप्तिपक्षधर्मताविरह" इत्यनन्तरं विरोधिपरामर्शकार्यानुमित्यनुत्पादकल्प्यप्रतिबन्धकताक इति पूर्णीयमित्याशयेन व्याचष्टे ( नत्विति ) व्याप्त्यादिविरहस्य स्वरूपसतो दोषत्वाप्रसक्तेरन्यज्ञाप्यमानस्य तथात्वे च विरोधिपरामर्शस्यानुपयोगितया तदसंवलन दशायामपि सत्प्रतिपक्षतापत्तेः, अतो नत्वित्यनन्तरं "तेन ज्ञाप्यमान" इति पूरणीयमित्याशयेन व्याचष्टे (तेनेति) 'सद्धेतावपि'- व्याप्तिपक्षधर्मताविरह-

**सत्प्रतिपक्षत्वात् । एकत्र व्याप्तिभंगज्ञानद्वारा वाऽस्य दूषकत्वञ्च ।**

व्याप्त्यादिविरहज्ञानद्वारा [अस्य] दूषकत्वमाह (एकत्रेति) वाकारो ऽनास्थायाम् । प्राथमिकावश्यकानुमितिप्रतिरोधेनैव तथात्वात्, परमुखनिरीक्षकत्वेन त [द्विषय] स्याभासत्वायोगाच्चेति ।

शून्येपि । एतादृशमूलप्रतीकानन्तरं पूरयति (तस्येति) विरोधिपरामर्शस्येत्यर्थः । "सत्प्रतिपक्षत्वा" दिति मूलस्य व्याख्या 'अनुमितिविरोधित्वा' दिति । दूषकत्वम् विरोधिपरामर्शस्यानुमितिविरोधित्वम् । एतन्मतस्य दूष्यत्वाद्वाकारमानिर्भरसूचकतया व्याचष्टे (वाकार इति) अनुमितिप्रतिरोधेन- अनुमित्यनुत्पादानुरोधेन । विरोधिपरामर्शस्य, "तथात्वात्" साक्षादेव प्रतिबन्धकत्वात् । अन्यथा व्याप्तिभङ्गज्ञानस्योदीच्यतया साक्षादनुमित्यविरोधितया च विरोधिपरामर्शसंवलितपरामर्शात् प्रथममनुमितिस्स्यादेव, बाधकाभावादिति भावः । परम्परया व्याप्तिज्ञानविरोधित्वं न हेत्वाभासतायां मुपयुज्यत इत्याह (परेति) प्रथमपक्षे विरोध्यनुमितिसामग्र्या अनुमितिविरोधित्वे प्रत्यक्षप्रतिबन्धकत्वमपि तस्यास्स्यात्, विरोधिज्ञानसामग्रीत्वाविशेषादित्याशंक्य "चक्षुरादेश्च" इत्यादिग्रंथमवतार्य फलानुरोधेन प्रत्यक्षसामग्र्या बलवत्त्वमित्यर्थकतया व्याख्यानमयुक्तम्, भिन्ने विषये अनुमितिसामग्र्याः प्रत्यक्षसामग्रीतो बलवत्त्वात् ; अत "एकत्रे" त्यादि पक्ष एव व्याप्तिभङ्गद्वारा व्याप्तिसापेक्षप्रमाण एव दूषकता सम्भवतीति चक्षुरादेरतथाभूततया तत्प्रतिरोधकत्वं विरोधिपरामर्शस्य न स्यादित्याशंकया चक्षुरादेश्चेति फक्किकामवतार्य इष्टापत्तिपरतया मिश्रा व्याख्यातवन्तः । तत्र विरोधिपरामर्शस्य लौकिकचाक्षुषाद्यप्रतिबन्धकत्वेपि उपनीतभाने जननीये चक्षुरादेश्शब्दस्य च प्रतिबन्धकतायां कथंताया अनिवृत्तेः, स्वमम्, विशिष्टबुद्धौ तदभावव्याप्यवत्ताबुद्धेस्साक्षात्प्रतिबन्धकतया दूषकत्वे निर्भरस्य

चक्षुरादेश्च नानुमानेन प्रतिरोधः, तदुपस्थितावपि फलदर्शनेन तस्याधिकबलत्वात् । नन्वेवंवादिवाक्यमात्रस्य प्रतिरोधकत्वेनानुमानमात्रोच्छेदः, नच

ननु विरोधिपरामर्शो यदि विपरीतनिर्णयविरोधी, कथं तर्हि सति विशेषदर्शने नयनादिजन्मा पीतत्वादिभ्रम इत्यत आह (चक्षुरादेश्चेति) चस्त्वर्थः। वर्णितत्वाचादृशप्रतिबन्धकत्वानुपपत्तिशङ्कयैव तादृशमूलमवतारयति (नन्विति) ' विरोधिपरामर्शः ' तद्विपरीतव्याप्यवत्तानिर्णयः । ' विपरीतनिर्णयविरोधी ' तद्विशिष्टज्ञानविरोधी । ' विशेषदर्शने ' पीतत्वाभावव्याप्यवत्ता निश्चये, सति चानुमिति प्रतिबन्धकबाधादौ । " चक्षुरादेश्चे " ति चकारस्यानुमानशब्दसमुच्चायकता न सम्भवति, तस्यानुमानप्रतिरोध्यत्वादत आह ( चस्त्वर्थ इति । )

" नानुमानेन प्रतिरोध " इति मूलस्य दोषविशेषाधीनज्ञाने जननीय इत्यादिः ( तदुपस्थितावपीति ) विरोधिपरामर्शसत्त्वेपीत्यर्थः । तस्य-दोषादिसमवहितचक्षुरादेः । अधिकबलत्वात्-अधिकबलत्वोपगमात् । अप्रतिबद्धयफलकत्वोपगमादिति यावत् । तथाच दोषविशेषयजन्यत्वं साक्षात्कारित्वव्यञ्जकदोषविशेषजन्यज्ञानसाधारणविषयितविशेषशून्यत्वं वा विरोधिपरामर्शप्रतिबद्धयतावच्छेदककोटावधिकं फलबलेन विशेषणीयमिति भावः । ( नन्विति ) एवं-विरोधिज्ञानसामग्र्या निश्चयविरोधित्वे । यद्यपि विरोधिपरामर्शस्य तदभावव्याप्यवत्ताज्ञानविधयैव शिरोमणिमते प्रतिबन्धकत्वम्, तन्मते मूलस्थसामग्रीपदेनापि साध्याभावव्याप्यवत्तापरामर्शस्य विवक्षणीयत्वात् । तथापि सामग्रीपदस्य यथाश्रुतार्थपरत्वाभिमानेनेयमाशङ्का । 'वादिवाक्यमात्रस्य'-साध्याभावबोधकवादिवाक्यमात्रस्य । मात्रपदेनसाध्याभावबोधकमनुमानापेक्षाव्यवच्छेदः । प्रतिरोधकत्वेन-प्रतिरोधकत्वप्रसङ्गेन । अनुमानमात्रोच्छेदः परार्थानुमानमात्रोच्छेदः । विरोधिबोधकवाक्यादेवानुमि

विरोधिवाक्यस्य न्यूनबलत्वे लक्षणायोगः, समानफलत्वे प्रतिरोध एव, अधिकबलत्वे नरशिरश्शौचानुमानवत्तेन बाध एवेति वाच्यम्;- अगृह्यमाणविशेषदशायां प्रतिवादिवाक्येन सर्वानुमानप्रतिरोधापत्तेः । अनुमानात्पूर्वं पश्चाद्वा ऽनुमानांतरेण तस्य न्यूनाधिकबलत्वानिरूपणात् । निरूपणे वा ऽनुमानवैयर्थ्यापत्तेः । मैवं, विरोधिवाक्यमात्रस्य समबलत्वाभावात् । उक्तं हि व्याप्तिपक्षधर्मते बलमिति । प्रत्यक्षादेर्लिंगभावेनैवानुमान प्रति-

---

अथ व्याप्तिपक्षधर्मते यदि बलं कथं तर्हि प्रत्यक्षादेः प्रतिरोधकतया कथायामुपन्यास इत्यत आह ( प्रत्यक्षादेरिति )

---

त्यनुत्पादप्रसङ्गः। न्यूनबलत्वे-अनाप्तोक्ततया निश्चितत्वे। लक्षणायोगः-प्रतिरोधाप्रयोजकतया समानबलत्वयोगः। समानबलत्वे-अनाप्तोक्ततयाऽनिश्चितत्वे । "प्रतिरोधः" इष्ट एवेति शेषः । अधिकबलत्वे, आप्तोक्ततया निश्चितत्वे । शौचानुमानवत्- शौचानुमानस्येव । तेन-विरोधिबोधकशब्देन । बाधः-विरोधिनिश्चयजननम् । परार्थस्थले मध्यस्थस्य पक्षे साध्यमिव साध्यतदभावग्राहकगानयोराभासत्वं सन्दिग्धं, नतु कुत्राप्याभासत्वमनाभासत्वं वा निश्चितम् । प्रमाणान्तरेण तन्निश्चये साध्यस्यापि प्रमाणान्तरेण निश्चयसम्भवाद्विवादपर्यवसानापत्तेरिति समानबलतया प्रतिवादिशब्दः प्रतिरुन्ध्यादेवानुमानमित्याह ( अगृह्यमाणेति )

दीधितौ ( तर्हीति ) तर्हि कथं प्रतिरोधकतया कथायां प्रत्यक्षादेरुपन्यास इत्यन्वयः । अनुमान एव तद्व्याप्तबलसत्त्वादिति भावः ।

रोधः, कथायां तदुपन्यासानर्हत्वात् । यत्तु विरोधिव्याप्यद्वयस्याऽसाधारणत्वात् संशयजनकत्वं

---

अत्र हेतुमाह ( कथायामिति ) प्रत्यक्षस्य स्वरूपसत्त्वयैव बोधकत्वात्, विरोधिवाक्यमात्रस्यानुमित्यविरोधित्वात्, बोध्यभावव्याप्यवत्तानिर्णयेनैव शाब्दबोधप्रतिरोध चेति ।

---

मूले " प्रतिरोधः "- प्रतिरोधकतया प्रत्यक्षादेरुपन्यासः ।

दीधितौ ( अत्रेति ) व्याप्तिपक्षधर्मतया ज्ञायमानत्वरूपं लिङ्गभावमपुरस्कृत्य प्रत्यक्षशब्दयोः प्रतिरोधकतया ऽनुपन्यसनीयत्व इत्यर्थः ।

मूले ( तदुपन्यासानर्हत्वादिति ) लिङ्गभावानापन्नप्रमाणस्यानुपयुक्तोपन्यासकत्वादिति भावः ।

हेतुमुखेन तदुपन्यासानुपयोगित्वं व्यवस्थापयति दीधितौ ( प्रत्यक्षस्येति ) स्वरूपसत्तयैव- स्वज्ञानानपेक्षयैव ( बोधकत्वादिति ) तथाचोपन्यासस्य परज्ञापनमेव फलं, प्रत्यक्षप्रमाणस्य च यदि ज्ञानमेवानुपयुक्तं, तदा क उपन्यासोपयोग इति भावः । ननु प्रत्यक्षस्य ज्ञानानपेक्षस्य बोधकतया तदुपन्यासस्य विरोधिज्ञानसामग्रयसम्पादकत्वेपि आदिपदग्राह्यशब्दस्य ज्ञातस्यैव बोधकतया तदुपन्यासस्य विरोधिज्ञानसामग्रीसम्पादकतया उपयोगित्वं दुर्वारमेवेत्यत आह ( विरोधिवाक्यमात्रस्येति ) विरोधिवाक्यज्ञानमात्रस्येत्यर्थः । मात्रपदेन कारणान्तरसाहित्यव्यवच्छेदः । ( अविरोधित्वादिति ) तन्मात्रस्य विरोधिबोधकसामग्रीत्वविरहादिति भावः । तथापि कारणान्तर सहितज्ञानस्यैव प्रतिरोधोपयोगितया उद्भावनसार्थक्यमित्यत आह (बोध्येति) तथाच व्याप्यवत्तापरामर्शदशायां विरोधिवाक्यज्ञानादिसत्त्वेपि तदभावव्याप्यवत्तानिश्चयाभावघटितशाब्दसामग्र्याः कथंञ्चिदप्यसम्भवेन लिङ्गभावानापन्न शब्दप्रमाणोपन्यासो न विरोधिबोधसामग्रीं सम्पादयतीति न कश्चिदुपयोग इति भावः ।

दूषकताबीजमिति । तन्न, एकैकं हि सत्प्रतिपक्षं, नतु विशिष्टम । तादृशं च न संशायकम् ।

अनुमितिद्वयस्य प्रामाण्यग्राहकाप्रवृत्तिर्दूषकताबीजमित्यन्ये । तन्न, परस्परप्रतिबन्धेनानुमितेरेवानुत्पत्तेः ।

रत्नकोशकारस्तु सत्प्रतिपक्षाभ्यां प्रत्येकं स्वसाध्यानुमितिस्संशयरूपा जन्यते, विरुद्धोभयज्ञानसामग्र्यास्संशयजनकत्वात् । संशयद्वारा चास्य दूषकत्वम् । नच संश

---

इदमुपलक्षणम्; पक्षे साध्यं नास्तीति वाक्यस्यानुपूर्वीविशेषप्रकारेणैव ज्ञानं पक्षे साध्याभाववत्त्वावगाहिविरोधिबोधसामग्रीघटकम्, तादृशश्च ज्ञानं प्रत्यक्षात्मकं तादृशवाक्यप्रयोगादेव सम्पद्यते, नतु साध्याभावप्रमापकशब्दविषयः पक्ष इत्याकारकतदुपन्यासादिति न कथञ्चिदपि तादृशोपन्यासस्य प्रतिरोधकतेत्यपि बोद्धव्यम् ।

मूले (एकैकमिति) "एकैकम्"- प्रत्येकहेतुवृत्तितात्किञ्चित्तावच्छेदकावच्छिन्नम् । सत्प्रतिपक्षं- सत्प्रतिपक्षविषया दुष्टव्यवहारविषयः । नतु, विशिष्टम्- हेतुप्रतिहेतुसाधारणरूपावच्छिन्नम् । (तादृशञ्च न संशायकमिति) संशायकतया दुष्टताबीजत्वे तादृशदुष्टव्यवहारानुपपत्तिरित्यर्थः । विरोधिमानसामग्र्यास्संशयविरोधित्वे संशयमात्रोच्छेदप्रसङ्ग इति प्रकरणसमे विरोधिमानसामग्रीविषया संशयरूपामनुमितिं मा प्रतिरौत्सीत् । विरोधिविषयकत्वेन बाधवत्तदभाववव्याप्यवत्तानिश्चयस्य प्रतिबन्धकत्वं दुर्वारमिति शङ्कते (नच संशयरूपा नानुमितिरित्यादिना) बाधबुद्धेर्विरोधिविषयकत्वमात्रं न प्रतिबन्धकत्वे तन्त्रं, किन्तु निश्चितप्रामाण्यकत्वे सति विरो-

यरूपा नानुमितिः, बोध येत्र विरोध्युपस्थितेरनुमितिसाम-ग्रीविघटकत्वेनावधारणात्; अन्यथा बाधेऽप्यनुमित्यापत्ते रिति वाच्यं। अधिकबलतया बाधेन प्रतिबन्धात्। तुल्य बलादनुमितिस्स्यादेव, सामग्रीसत्त्वात्। साध्याभावबोध स्यच तत्र प्रतिबन्धकत्वं, नतु तद्बोधकस्य नयनादेः। प्र-त्येकं निर्णायकत्वेनावधारितात्कथं संशय इति चेन्न:-प्रत्ये-कादि ज्ञानमुत्पाद्यमानमर्थात्संशयः, नतु प्रत्येकं संशयजन कत्वमिति मेने। तन्न,

---

धिविषयकत्वम्, सत्प्रतिपक्षस्थले च मयव्याप्यवत्ताज्ञानयोरेव प्रामाण्यानि-श्चयान्नानुमितिप्रतिरोध इति समाधत्ते (अधिकबलतयेति) ननु प्रत्यक्षे समानबलग्राह्याभावग्रहसामग्रीसंशयानुपपत्त्या अविरोधिन्यस्ताम्, अनुमितौ तस्याः प्रतिबन्धकत्वे का क्षतिरित्यत आह (साध्याभावबोधस्यचेति) साध्याभावनिश्चयस्यैवेत्यर्थः। 'तत्र'- अनुमितौ। 'नयनादे' रित्या-दिना विरोधिपरामर्शपरिग्रहः। नयनग्रहणं दृष्टान्तार्थम्। मानाभावादिति पूरणीयं (प्रत्येकमिति) एकैककोटिनिश्चयजनकत्वेनावधारितात्परामर्शादित इत्यर्थः। (कथं संशय इति) संशयत्वावच्छिन्नं प्रति परामर्शस्य हेतु-तायाः क्वाप्यक्लृप्तत्वादिति भावः। संशयत्वस्य जन्यतानवच्छेदकत्वेपि त-त्तत्प्रकारकज्ञानत्वावच्छिन्नोत्पत्तिनियामकसामग्रीत एव सर्वत्र संशयः, प्रत्ये-ककोटिभानसामग्र्यास्संशयत्वावच्छिन्नजनकत्वंतु प्रत्यक्षस्थलेपि नास्तीत्याह (प्रत्येकादीति) तथाच तत्तत्प्रत्येकसाध्यकानुमितित्वस्य निश्चयसाधारण-स्य तत्तत्साध्यव्याप्यवत्तापरामर्शजन्यतावच्छेदकत्वेपि तद्घटितसामग्रीसमाजा त्संशयानुमितिर्निष्प्रत्यूहैवेति भावः। अगृहीताप्रामाण्यकत्वे सति विरोधि-विषयकत्वमेव बाधप्रतिबन्धकत्वे प्रयोजकम्, नतु निश्चितप्रामाण्यकत्वसहि तमित्याशयेन दूषयति (तन्नेति)-

रत्नकोशकृतामयमभिप्रायः- एकधर्मिकाविरुद्धानेकप्रकारकनानाधर्मिकैकविरुद्धविरुद्धनानाप्रकारकज्ञानत्वादिवदेकधर्मिकविरुद्धानेकप्रकारकज्ञानत्वरूपं संशयत्वं न जन्यतावच्छेदकम्, तत्तद्धर्मिकतत्तत्प्रकारकज्ञानत्वप्रयोजकसमाजप्रयोज्यत्वात्समाजस्य ।

---

रत्नकोशकारमतं परिष्कर्तुमारभते दीधितौ "रत्नकोशकृता" मित्यादिना । संशयत्वं यदि किञ्चिज्जन्यतावच्छेदकं तर्हि तदघटितसामग्रीत एव संशयत्वावच्छिन्नोत्पत्तिरिति नियमसम्भवेऽप्यनुमितेस्संशयत्वं न सम्भवति, अनुमिति सामग्रीघटकस्य परामर्शादेः कस्यापि संशयत्वावच्छिन्नजनकत्वात्, अतस्संशयत्वस्य जन्यतावच्छेदकत्वाभावं मूलकारोक्तं प्रतिबन्दिसूचनेन द्रढयति ( एकधर्मिकेति ) 'अविरुद्धानेकप्रकारके' त्यस्य द्वन्द्वात्परं श्रूयमाणज्ञानत्वेन सम्बन्धः । प्रकारांशे संशयत्वघटकविरुद्धत्वविपरीतविशेषणघटितधर्मस्य जन्यतावच्छेदकत्वप्रसक्तिं प्रदर्श्य धर्म्यंशे तद्घटकैकत्वविपरीतविशेषणघटितस्य प्रकारांशे विशेषणानेकत्वविरुद्धैकत्वविरुद्धाविरुद्धनानात्वभेदेन भिन्नस्य तद्धर्मद्वयस्य तथात्वापत्तिमपि सूचयति ( नानाधर्मिकेति ) एकत्वस्य प्रकारांशे विरुद्धत्वाविरुद्धत्वयोर्नानापदार्थे प्रत्येकमन्वयः । "न जन्यतावच्छेदकम्"- कस्यापीति शेषः । नन्वेवं क्वचिज्ज्ञाने संशयत्वं कादाचित्कत्वं किन्नियामकमित्यत आह ( तत्तद्धर्मिकेति ) पर्वतादिधर्मिकेत्यर्थः । ( तत्तत्प्रकारकेति ) वह्निवह्न्यभावादिप्रकारकेत्यर्थः । ( प्रयोजकसमाजेति ) तदवच्छिन्नोत्पत्तिनियामकसामग्रीसंवलनेत्यर्थः । "समाजस्य"- पर्वतादिधर्मिकवह्न्यादिप्रकारकत्वतद्धर्मिकवह्न्यभावादिप्रकारकत्वयोर्वैशिष्ट्यस्य । तथा चैकमात्रकोटिभानप्रयोजकसामग्रीदशायां यज्ज्ञानं जायते तत्र तत्कोटिप्रकारकत्वे विरुद्धकोट्यन्तरप्रकारकत्ववैशिष्ट्यप्रयोजकस्य तत्कोटिप्रकारकत्वप्रयोजकसामग्र्यां कोट्यन्तरप्रकारकत्वप्रयोजकसामग्रीवैशिष्ट्यस्य विरहाद्विरुद्धकोट्यन्तरप्रकारकत्वविशिष्टतत्कोटिप्रकारकज्ञानत्वरूपसं-

क्वचिद्विरोधभानस्यापि तत्प्रयोजकाधीनत्वात् । नीलेतरघटत्वघटत्वाप्रकारकज्ञानत्वैकधर्मिकविरुद्धानेकप्रकारकान्यज्ञानत्वादिवच्च संशयान्यज्ञानत्वादिरूपं निश्चयत्वमपि न जन्यतावच्छेदकम्, तत्तत्प्रयोजकविरहादेव तद्विरहाद्युपपत्तेः ।

---

शयत्वविरहः, कोटिद्वयमानसामग्र्युत्तरञ्च यत्र यते तत्र तादृशप्रयोजकवैशिष्ट्यसत्त्वेनैतादृशसंशयत्वमिति संशयत्वस्य जन्यतानवच्छेदकत्वेपि तन्नियमनिर्वाह इति भावः । ननु कोटिद्वयावगाहिज्ञानत्वमात्रं न संशयत्वम्, तस्य समुच्चयसाधारणत्वात्; किन्तु एककोट्यंशे अपरकोटिविरोधावगाहित्वसहितम्, तादृशस्य कोटिद्वयभानप्रयोजकसंवलनमात्रं न नियामकम्, तत्सत्त्वेपि समुच्चये संशयत्वाभावादिति- संशयत्वप्रयोजकमन्यदेव किञ्चिदुपगन्तव्यम्, यतः क्वचिदेवोभयावगाहिज्ञाने संशयत्वमिति नियम इति तस्यैव कार्यतावच्छेदकं संशयत्वमावश्यकमित्यत आह (क्वचिदिति) उभयप्रकारक इति शेषः । तथाच विरोधभानस्या समग्रकोटिद्वयप्रकारकज्ञानवृत्तितायाः इत्यर्थः (तत्प्रयोजकाधीनत्वादिति) अव्याप्यवृत्तित्वज्ञानाभावादिघटितविरोधभानप्रयोजकक्लृप्तसामग्र्यन्तरस्य क्वाचित्कत्वप्रयोजकत्वादित्यर्थः । तथाच तत्संवलनस्यापि विरोधभानघटितसंशयत्वप्रयोजकतया समुच्चयस्थले तद्विरहादेव संशयत्वविरह इति भावः । उक्तयुक्तिभिस्संशयत्वस्य कार्यतावच्छेदकत्वखण्डनं वस्तुगतिमनुरुद्ध्य, वस्तुतस्संशयत्वस्य कार्यतावच्छेदकत्वेपि तस्य धर्मितावच्छेदकप्रकारकज्ञानजन्यतावच्छेदकताया एव स्वीकरणीयतया प्रत्यक्षस्थले यथा तत्तदभावप्रकारकज्ञानसामग्रीद्वयसहितधर्मिज्ञानरूपसामग्री संशयं जनयति तथानुमितिस्थलेपि तादृशधर्मिज्ञानात्मकसामग्र्या संशयजनने न किञ्चिद्बाधकम् । ननु माभूत्संशयत्वं जन्यतावच्छेदकम्, तथापि निश्चयत्वावच्छिन्नहेतुभूतात्परामर्शादितः कथं संशयानुमितिरित्याशङ्कया निश्चयत्वस्यापि जन्यतावच्छेदकत्वं निराकरोति (नीलेतरेति) यथा घटे नीलरूप-

एवञ्च तुल्यबलाभ्यां विरुद्धोभयसामग्रीभ्यां जायमानं ज्ञानमर्थात्संशयरूपं भवति ।

---

वच्छेदकनीलेतरत्वप्रयोजको घटे नीलोत्पादकसामग्रीविरहः, घटत्वप्रयोजकञ्च घटत्वावच्छिन्नहेतुदण्डादिघटितसामग्रीजन्यत्वम्, तत्संवलनाधीनं नीलेतरत्वघटत्वयोस्संवलनमिति तदेव नीलेतरत्वविशिष्टघटत्वस्य नियामकमिति तस्य किञ्चिज्जन्यतानवच्छेदकत्वेपि कस्यचिदेव घटस्य तथात्वमिति नियमः. एवं पटादिज्ञाने घटत्वप्रकारताविरहः तत्पूर्वकालीनघटत्वप्रकारकतावच्छिन्नजनकघटत्वज्ञानादिघटितसामग्रीरूपतथात्वप्रयोजकविरहप्रयोज्य इति ज्ञानत्वप्रयोजिका तत्पूर्वकालीनसामान्यसामग्री घटत्वप्रकारकत्वावच्छिन्नोत्पादकसामग्रीविरहश्चेति द्वयोस्संवलनं घटत्वाप्रकारकत्वज्ञानत्वयोस्संवलनप्रयोजकम्, तदेव जन्यतानवच्छेदकस्याप्येकविशिष्टापरस्य प्रयोजकम्, एवमेकधर्मिकाविरुद्धानेकप्रकारकत्वं संवलितनानासामग्रीप्रयोज्यम्, तद्विरहप्रयोज्यस्ताद्विरहः, तत्संवलितज्ञानत्वप्रयोजकप्रयोज्यं तद्विशिष्टज्ञानत्वमिति यथास्तस्य जन्यतानवच्छेदकत्वेपि नानियमः; तथा निरुक्तनिश्चयत्वस्यापीत्यर्थः ।

यद्यपि तत्प्रयोजकसमाजनियाम्यस्य जन्यतानवच्छेदकतायां एकधर्मिकाविरुद्धनानाप्रकारकज्ञानत्वमेव पूर्वं दृष्टान्तीकृतम्, तथापि तत्र सामग्रीरूपप्रयोजकसमाजनियाम्यत्वमेव, नतु सामग्रीविरहसमाजनियाम्यत्वम्, निश्चयत्वेच तादृशमेवेति प्रकृतसाम्याय दृष्टान्तान्तरानुसरणम् । तत्र प्रथमे तज्जनकसामग्रीद्वयस्य संवलनस्य तद्वदन्यत्वविशिष्टप्रयोजकता. द्वितीये तदवच्छिन्नजनकसामग्रीविरहसंवलनस्य, तृतीये तद्घटकनानाधर्मावच्छिन्नहेतुभूतनानासामग्रीसंवलनविरहसंवलनस्येति, उत्तरोत्तरं निश्चयत्वसाम्यौत्कट्यमिति बोद्धव्यम् ( एवचं ति ) संशयत्वनिश्चयत्वयाः जन्यतानवच्छेदकत्वेचेत्यर्थः । तुल्यबलाभ्याम्- परस्परकार्याविरोधिनीभ्याम् (संशयरूपं भवतीति

तथाच समबलप्रतिपक्षसंवलनस्थले तुल्यबलकोटिद्वयानुमितिसामग्रीभ्यां संशयानुमिति र्जन्यत एवेति भावः ।

अथ फलस्य विरोधभासक विरोधावगाहि परामर्शघटित सामग्र्यभावा द्विरोधो नभासितु मिष्टे, तथाच कथंसंशय इति चेन्न; सत्प्रतिपक्षतादशायां कोटिद्वयनिश्चयानुत्पादस्योभयवादिसिद्धतया तन्निर्वाहाय परस्परभ्यकार्ये विरोध्यनुमितिसामग्र्योः प्रतिबन्धकतापेक्षया विरोधभानप्रतिबन्धकाभाव सहकारेण विरोधाविषयकस्यापि परामर्शस्य विरोधभानप्रयोजकता या लाघवेन कल्पनात्, अनुपस्थितस्य विरोधस्य प्रकारतया भानासम्भवेऽपि विरोधसम्बन्धेन एककोट्यंशे परस्य प्रकारतयैककोटिसम्बन्धनिष्ठसंसर्गतायां कोट्यन्तरविरोधस्याऽवच्छेदकतया वा भानोपगमात् । अन्यथा यत्र कोट्यो र्नाविरोधग्रहः नवा विरोधस्योपस्थिति र्वर्तते तत्र सामग्रीसमाजात् प्रत्यक्षात्मककोटिद्वयनिश्चयस्य दुर्वारत्वात् ।

अथ यत्र कोट्यो र्नाविरोधग्रहः, अथच धर्मिणि विरोधसम्बन्धेनैककोटि विशिष्टापरकोटे र्विरोधविशिष्टसंयोगादिसम्बन्धेन च कोट्यो र्बाधग्रहः, तत्र कथञ्चिदपि विरोधभानासम्भवेन एकस्य प्रतियोगि तदभावनिश्चयरूपानुमिति र्जायतामितिचेत्? प्रत्यक्षस्थलेऽप्येषोऽनुयोगस्तुल्यः ।

अथ धर्मिणि संशयान्यतद्वत्ताज्ञानं प्रत्यव्याप्यवृत्तित्व ज्ञानाभाव विशिष्ट तद्विरोधिधर्मवत्ताज्ञानसामग्रीप्रतिबन्धिकेति दर्शितस्थले परस्परविरोधेन तत्तदभावयो र्न प्रत्यक्षनिश्चयोत्पत्तिः, प्रत्यक्षानुमित्यादिसामग्रीणाञ्चानुगतरूपेण प्रतिबन्धकताकल्पनासम्भवात्, अनुमितिस्थले विरोध्यनुमिति सामग्र्याः प्रतिबन्धकत्वे कल्पनीये संशयान्यत्वं न प्रतिबध्यतावच्छेदकगर्भे निवेश्यत इति क संशयानुमितिवार्तेति ।

अत्रार्वाचीनाः, संशयत्वं न विरोधावगाहित्वानियतम्, तथाहि—यथा लौकिक मणिकर्जन्ये साक्षात्करोमीति प्रतीतेः विषयताविशेषः, अनु-

मिनो व्यापादयामीति प्रतीतेरनुमित्यापत्त्यो स्साध्याभावयो विषयताविशेषश्च दुरपह्नवः, तथा सन्देहोऽस्त्यनुव्यवसायबलात्संशयेऽपि कोट्यंशे विलक्षणविषयता निष्प्रत्यूहैवेति तत्प्रतियोगित्वमेव संशयत्वम्, तस्य विरोधानवगाहि ज्ञान-साधारण्ये न किञ्चिद्बाधकम्। नच तादृशप्रतीते र्विरोधावगाहि समानध-र्मिक तत्तदभावावगाहि ज्ञानत्वावलम्बनतयैवोपपत्ते र्विषयताविशेषे किं मान-मिति वाच्यम्, क्वचित्संशये विरोधस्य सांसर्गिकविषयतायाः प्रमाणान्तर रहिताया उक्तातिप्रसङ्गवारणाय सामग्रीप्रतिबन्धकतायाश्च कल्पनामपेक्ष्य ला-घवेन कोटित्वाख्याविलक्षण विषयताया एव कल्पयितुं युक्तत्वात्। साच प्रकारताभेदः। तदन्यैववा, कोटिविशेष्यकसंशयसाधारण्यानुरोधात्। नच तादृशविषयतानिष्ठं वैलक्षण्यं दुर्घटम्, अखण्डोपाधेरपसिद्धान्तकवलितत्वा-दिति वाच्यम्; एवं सति विषयतात्वप्रकारतात्वादीनामपि विलयप्रसङ्गेन बहुतरासामञ्जस्यात्। अस्तुवा- एककोटिविषयकत्वावच्छिन्न विरोधिकोट्य-न्तरविषयकत्वेन ज्ञाननिरूपितत्वमेव समुच्चयविषयताव्यावृत्त स्तद्विशेषः .. संशय एव तत्तत्कोटिविषयकत्वयोर्मिथोवच्छेद्यावच्छेदकभावोपगमात्। तादृ-शविषयताशालिबुद्धौच मणिमन्त्रादिन्यायेनैव कोट्यन्तरव्याप्यवत्तित्व ज्ञानस्य प्रतिबन्धकत्वमास्थीयते, नातस्समुच्चयदशायां संशयापत्तिः। एवं कोट्यंशे औत्कट्यरूपसम्भावनात्वमपि विषयताविशेष इति ध्येयम्।

नचैवमर्थसमाज रूपबाधकेन संशयत्वस्य कार्यतानवच्छेदकत्व व्यवस्थापनं दीधितिकृतां विरुध्यते. सामग्रीद्वयसमाजस्य तत्तत्सामग्रीप्रयो-ज्यकार्यतावच्छेदक द्वयसामानाधिकरण्यमात्रप्रयोजकत्वात् कार्यतावच्छेदक-विषयतयो रवच्छेद्यावच्छेदकभावादि प्रयोजकत्वासम्भवेन तत्समाजादवच्छे-द्यावच्छेदकभावापन्न विषयताविशेषरूपसंशयत्वानिर्वाहात्। तादृशविषयता-विशेषस्य समुच्चयसाधारण्यविरहेण विरोधानवगाहि ज्ञानसाधारण्यानुरोधेन च

अतएवाहत्यैव विप्रतिपत्तिजन्यत्वं संशयमामनन्ति । फलबलकल्पनीयश्च

कोटिद्वयभावसामग्रीसंवलनस्य विरोधभासकसामग्रीमनपेक्ष्याऽपेक्ष्य वा तत्प्रयोजकत्वस्याऽसम्भवदुक्तिकत्वाच्चेति वाच्यम् । विरोधावगाहित्व सहितकोटिद्वयावगाहित्वं संशयत्वमिति प्राचीनसिद्धान्तमवलम्ब्यापातंतस्तज्जन्यतानवच्छेदकत्वाभिधानात् ।

अथैवमपि संशयानुमिति व्यवस्थापन मशक्यम्, विषयताविशेषरूप संशयत्वे परामर्शादिघटितानुमिति सामग्र्याः प्रयोजकत्व कल्पकाभाव दिति चेन्न;- अविरोधज्ञानमनपेक्ष्य सामग्रीसमाजा देकदा- एकधर्मिणि तत्तदभावोभय निश्चयानुमित्यनुदयात्संशयानुमितिसिद्धौ अव्याप्यवृत्तित्व ज्ञानाभावसहितयोः प्रत्यक्षसामग्र्यो रिवानुमित सामग्र्योरपि संशयत्वावच्छिन्नोत्पत्ति प्रयोजकत्वाया अवर्जनीयत्वात् । नच संशयत्वाघटकीभूताया निश्चयीयविषयता तस्या स्संशयव्यावृत्त्यै संशयसामग्र्या स्तदवच्छिन्नं प्रति प्रतिबन्धकत्वं कल्पनीयम्, संशयसामग्र्यत्वञ्च प्रत्यक्षानुमिति सामग्रीसाधारणा नकामन्त्यव्याप्यवृत्तित्व ज्ञानाभावविशिष्टविरोधिकोट्यनुमिति सामग्र्याः प्रतिबन्धकत्वे कल्पनीये अनुमितित्वस्यैव तत्प्रतिबद्धयतावच्छेदकत्व मुपेयते, लाघवात्, नतु निश्चयत्वस्येति न संशयानुमिति सम्भव इति वाच्यम् । प्रत्यक्ष संशयस्य तादृशविषयताशालित्व वारणाय तदवच्छिन्न प्रति संशयेपधायकत विशिष्टत्वेनैव सामग्र्याः प्रतिबन्धकत्वकल्पनाच्चद्रूपस्य च संशयानुमिति सामग्रीसाधारणतया तत्प्रतिबन्धकतान्तराकल्पनादिति वदन्ति ।

"अतएव"- तुल्यबलसामग्री समाजा त्प्रत्यक्षस्येव परोक्षस्यापि संशयस्योत्पत्तौ बाधकाभावादेव । "आहत्यैव"- साक्षादेव । विप्रतिपत्तिवाक्यतो जन्म यस्य एवं भूतं शाब्दबोधात्मकं संशयमपि वदन्तीत्यर्थः । ननु समानबलत्वं न्यूनाधिकबलत्वं वा सामग्र्याः कथ मवधारणीयमित्यत आह ( फलबलकल्पनीयश्चेति ) सामग्रीसंवलनस्थले एकस्याः

न्यूनाधिकसमबलभावः, सत्यामपि पीतत्वशुक्लत्वस्मृतौ सविधवर्तिनि शंखे सति दोषविशेषे पीतत्वस्यैवाऽसतिच शुक्लत्वस्यैव, दूरस्थे च धर्मिणि असति विशेषदर्शने स्मृतयोरेव कोट्योः सतिच एकस्या एव नयनेन ग्रहणात् ।

---

फलानुत्पत्त्या न्यूनाधिकबलभावः उभयोः फलोत्पत्त्या समबलभावो ऽवधारणीय इत्यर्थः । एतदेव विशिष्योदाहरति ( सत्यामपीति ) ( पीतत्वशुक्लत्व स्मृताविति ) " सविधवर्तिनि " " शंख " इत्याभ्यां विशेषणज्ञानविशेष्येन्द्रिय सन्निकर्षघटित तदुभयविशिष्ट प्रत्यक्षसामग्रीसत्त्वं दर्शितम् । "दोषविशेषे " पीतद्रव्यसमवधानरूपे " पीतत्वस्यैव " ग्रहणादित्यक्रमेणान्वयः । तथाच फलबलात् श्वैत्यादि लौकिकप्रत्यक्षसामग्रीतो दोषविशेषोपबृंहित पीतत्वशुक्लत्वभावादि ग्राहकसामग्र्या बलवत्त्वमिति भावः । दोषविशेषासत्त्वे उपनीतभानसामग्र्यपेक्षया लौकिक सन्निकर्षघटित विरोधिग्रह सामग्र्या बलवत्त्वमित्याह ( असतिच शुक्लत्वस्यैवेति ) ... वि...षा समवधानस्थले उपनयघा...त सामग्र्...द्वयस्य तुल्यबलत्वमाह ( दूरस्थ इति ) धर्मिणो दूरस्थत्वे असतेच विशेषदर्शने विद्यमानेऽकोटेरपि न लौकिकसामग्री दूरत्वदोषस्य विशेषादर्शनसहितस्य लौकिकधर्मिविरोधित्वादिति लौकिकसामग्री विघटनाय दूरस्थत्व विशेषादर्शनयोरनुधावनम् । " स्मृतयो " रित्युपनय सम्पादनाय । " कोट्योः " स्थाणुत्व तदभावयोः । विशेषदर्शनघटित सामग्र्या बलवत्त्व माह ( सति चेति ) " सतिच " विशेषदर्शने । "एकस्याः " गृहीतविशेषायाः कोटेरेव । " नयनेन ग्रहणात् " । अत्रच ग्राह्यविपरीतविशेषदर्शनस्यैव प्रतिबन्धकत्वं ननु सामग्र्या इत्यवधेयम् ।

ननु कोटिद्वयभासक सामग्रीसमाजादेव चेत्संशयः तदा संस्कारं प्रति निर्णयत्वेन हेतुतयापि न संशयाकार स्मरणवारणसम्भवः, प्रत्येकं तत्तदभावगोचरनिश्चय जन्यसंस्कारद्वय संवलनात्तदुत्पत्तौ बाधकाभावादित्याश-

अथैवमुद्बुद्धाभ्यां विरोधिसंस्काराभ्यां स्मरणमपि संशयात्मकं स्यात् ? किं नस्या यदि च नानुभवबाधः, येन गुरुणापि निश्चयत्वेन संस्कारजनकत्वमुपेयते भवता । अथ विरोधिनो निर्णयोऽनुमितिप्रतिबन्धकः विरोधित्वञ्च सहानवस्थायित्वं साध्याभावस्येव तद्व्याप्यस्यापीति चेत् ? यदि वस्तुतो विरोधिनो निर्णयस्तथा, कथं तर्हि पक्षतावच्छेदकादे स्तादृशस्य निश्चये प्रमानुमितिः ।

---

इते ( अथैवमिति ) ( उद्बुद्धाभ्यामिति ) नचोद्बोधकस्य फलैकोन्नेयतया एकदा विरुद्धकोटिद्वयोद्बोधककल्पना ननुपपन्नेति वाच्यम्, नियतोद्बोधकसम्बन्धि वस्तुविशेषज्ञानादीना मनुगतरूपेणैव कारणतायाः क्लृप्तत्वाचादृशोद्बोधकद्वयसमवधानन्दैव यत्र तत्रैव प्रसक्ति सम्भवात् । अनुभवविरोधविरहे इष्टापत्तिमाह ( किं नस्यादिति ) अनुभवविरोधस्यापि स विवादतया ( यदीति ) " येन " - अनुभव विरोधेन । भवतेत्यनेन परस्परसामग्री प्रतिबन्धकताकल्पन मन्तरेण तवापि संशयाकारस्मरणवारणं न सम्भवतीति सूचितम् । बाधबुद्धे रनन्तान्योन्याभाव वत्ताधीसाधारणविरोधिप्रकारकत्वेनैव प्रतिबन्धकता, तथात्वञ्च विरोधिपरामर्शस्यापीति मूलोक्तसिद्धान्तं दूषयितु माशङ्कते ( अथेति ) तद्विरोधित्वं तदभावव्याप्यत्वं स्वव्यापकतत्कत्वरूपं वा । स्वत्वघटितत्वेन न सर्वसाधारण मित्यत उक्तं ( सहानवस्थायित्वमिति ) विरोधस्य विषये उपलक्षणत्वं विशेषणत्वंवेति विकल्प्य दूषयति ( यदीत्यादिना ) 'तथा'- प्रतिबन्धकः ( पक्षतावच्छेदकादेरिति ) इदन्त्वाद्यवच्छिन्नह्रदादिरूपपक्षविशेषणस्य हेतुत्वेनाभिमतस्यवा । " तादृशस्य "- वस्तुगत्या वह्न्यादिविरोधिनः । " निश्चये प्रमानुमितिः "-निर्णयाधीना प्रमानुमितिः । भवतीत्यर्थः । तत्र जनकज्ञानस्यैवोक्तप्रतिबन्धकतावच्छेदकाक्रान्तत्वादितिभावः । यद्यपि जलमयत्वादे र्विरोधानवगाहि ...दशायां तदनवच्छिन्नपक्षावगाहिन्या स्तल्लिङ्गिकायांश्चायं वह्नि-

अथ विरोधित्वेन ! तथा तदग्रहे नेह साध्यमित्यादिनिर्णयेऽप्यनुमिति प्रसङ्गः । अथ विशेषदर्शनं विरोधिबुद्धिप्रतिबन्धकम्, कथमन्यथा तदनन्तरं न भ्रमसंशयाविति चेन्न;-सत्यपि शुक्लत्वादिव्याप्यदर्शने शंखादौ दुष्टेन नयनेन पीतत्वादे रदुष्टेनच पीतत्वादिव्याप्यवत्तानिश्चये

---

भ्रम नित्य अनुमितेरपि पक्षतावच्छेदकावच्छिन्ने जलमयत्व भ्रमदशाया मनुपपत्ति-रस्ति, तथापि जलमयोयं वह्निमा नित्याद्यनुमितिस्थले प्रतिबन्धक नैयत्येन तथाविधानुमितिर्मा भूदिच्छेद इत्यभिप्रायेण तावद्दूरानुसरणम् । (अथ विरोधित्वेनेति ) " निर्णयस्तथे " त्यनुषज्यते । ' तदग्रहे '- वह्न्यभावादौ वह्न्यादे र्विरोधाग्रहे । ( अनुमितिप्रसङ्ग इति ) तथाच वह्न्यभावत्वाद्यवच्छिन्नावगाहि निश्चयत्वेनैव विशिष्य बाधबुद्धेः प्रतिबन्धकता-वाच्या, तच्च न विरोधिपरामर्शसाधारणमिति भावः ।

इद मुपलक्षणम्, अनुगततदधिकरणवृत्तित्व रूपविरोधावच्छिन्न प्रकारकनिश्चयत्वेन विरोधित्वेपि स्वव्यापकतत्सामानाधिकरण्यरूपव्याप्त्यव-गाहि विरोधिपरामर्शस्य तद्रूपानाक्रान्ततया तादृशपरामर्शाभ्यां संशयानुमिति जनने बाधकाभावः, एवं तत्सम्बन्धेन तदधिकरणवृत्तित्वावच्छिन्नस्व तत्सम्बन्धावगाहि ज्ञानमेव विरोधीति सम्बन्धविशेषनिवेशस्या वश्यकतया विशेषणताविशेषादिसंसर्गक प्रत्यभावादिज्ञान सम्बन्धान्तरावगाहि विरोधि-परामर्शयो र्नानुगतरूपेण प्रतिबन्धकतासम्भव इत्यपि बोद्धव्यम् ।

ननु माभूद्बाधबुद्धि प्रतिबन्धकतावच्छेदकरूपाक्रान्तत्वं विरोधिपरामर्शस्य; तथापि न संशयानुमित्यवसरः, स्थाणुत्वाभावव्याप्यकरादिमानयमित्यादिनि-श्चये स्थाणुत्वादिमत्यक्षभ्रमसंशयानुदया त्तद्विशिष्टबुद्धित्वावच्छिन्नं प्रति तद भावव्याप्यवत्तानिश्चयत्वेनप्रतिबन्धकताया आवश्यकत्वादित्य शङ्कते (अथेति). ( शुक्लत्वादीति ) पीतत्वाभावादीत्यर्थः । " दुष्टेन "- पित्तादिदूषितेन ( पीतत्वादीति ) शुक्लत्वाभावादीत्यर्थः । नन्वेवं संशयत्वं प्रतिबन्ध-

सत्यपि शुक्लत्वादेर्ग्रहात्, सति च विशेषदर्शने कार्येदुपनीतभानानुदयात्, दूरतः प्रमितस्य स्थाणुत्वादेः शाखादौ करादिभ्रमेणाग्रहात् तत्तत्स्थल-विशेष एव तस्य प्रतिबन्धकत्वमिति। अत्राहुः- अनुगतकार्यकारण-

---

विशेषणं देयमित्याशङ्कां उपपत्तिभान [निश्चय] विशेषासंग्रहं प्रदर्श्य दूषयति (सतिचेति) "विशेषदर्शने"- विरोधिव्याप्यदर्शने। ननु प्रथमस्थला-नुरोधेन दोषविशेषाजन्यत्वं द्वितीयानुरोधेन च लौकिकसन्निकर्षजन्यत्वं विशेषणं देयमित्यत आह (दूरत इति) "प्रमितस्य"- करादिभ्रमात्मा-कप्रमापकलौकिकसन्निकर्षाश्रयस्य। एतेन करादिभ्रमदशायामपि दूरत्वादेव स्थाणुत्वाद्यग्रह इति शङ्का निराकृता। (अग्रहादिति) तथा च लौकिकसन्नि-कर्षाजन्यत्वनिवेशे तत्र स्थाणुत्वादिप्रत्यक्षापत्ते स्तन्निवेशो न सम्भवतीति भावः (स्थलविशेष इति) यद्यद्व्यक्तिसत्त्वे विशिष्टबुद्धिर्नजायते तत्तद्व्य-क्तेरेव विशिष्टबुद्धित्वावच्छिन्नम्प्रति प्रतिबन्धकत्वं वाच्यमित्यर्थः। तथा च कोट्यन्तरविशेषदर्शनसहित विशेषदर्शनव्यक्तीनां प्रतिबन्धकत्वाकल्पनात्संश-यानुत्पत्तिरिति निष्प्रत्यूहमेवेतिभावः। क्वचिल्लौकिकसन्निकर्षजन्यज्ञाने दूरत्वादिसह कृततदभाववद्व्याप्यभ्रमस्य विरोधित्वेपि लौकिकसन्निकर्षाजन्यविशिष्टबुद्धित्वाव च्छिन्नम्प्रति तदभाववद्व्याप्यवत्तानिश्चयत्वे नानुगतप्रतिबन्धकताकल्पनमुचितम्, तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वेऽनन्तप्रतिबन्धकता प्रसङ्गात्। दूरत्वादिदोष सहकृतविशेषदर्शनस्य च प्रतिबद्धयतावच्छेदककोटौ लौकिकान्यत्व मनिवे-श्य प्रतिबन्धकत्वान्तरं कल्पनीयमिति समाधत्ते (अनुगतेति) "दोषवि-शेषादी" त्यादिना लौकिकसन्निकर्षपरिग्रहः। दोषविशेष जन्यज्ञानेपि साक्षात्कारित्वव्यञ्जकाविषयता विशेषोपगमा त्तच्छून्यत्वं निवेश्यैव दोषविशेष जन्यलौकिक सन्निकर्षजन्यज्ञाने व्यावर्तनीये। एवञ्च परमेश्वरबुद्धावपि ता-दृशविषयताया एव सर्वाकारान्न नित्यसाधारण्यम्, नवानुगतधर्मस्य प्रतिबध्य-तावच्छेदकत्वे चक्षुस्सन्निकर्षादिजन्यभेदानामेकत्र निवेशनीयतया मिथोविशे

भावानुरोधात् दोषविशेषाजन्ये ज्ञाने कदाचिदनुभवे वा विशेषदर्शनं विरोधि कल्प्यते । न च प्रत्यक्ष एव तथा, सामान्ये बाधकाभावात्; बोध्याभावव्याप्यवत्तानिश्चयेन शाब्दादिप्रतिबन्धाच्च ।

---

चक्षुस्संयोगाद्यजन्यचाक्षुषत्वादीनां जन्यतावच्छेदकत्वापत्तेः [अन्धकारे चक्षुस्संयोगदशायां घटे उपनीतभानस्य चक्षुस्संनिकर्षजन्यत्वेन प्रतिबध्यतावच्छेदकानाक्रान्ततया विशेषदर्शनकालेऽपि तादृशोपनीतभानापत्तेरिति] एवमनाहार्यत्वस्यापि निवेशो बोध्यः, तेनाहार्यचाक्षुषादीनां विरोधिनिर्णयप्रतिबध्यतोपपत्तिः । आहार्यत्वञ्च स्वविषयकेच्छाव्यवहितोत्तरक्षणोत्पन्नप्रत्यक्षत्वम्, स्वविषयत्व स्वाव्यवहितोत्तरत्वोभयसम्बन्धेन इच्छावच्छिन्नप्रत्यक्षत्वं वा । आहार्यचाक्षुषादौ च चाक्षुषादीच्छया हेतुत्वोपगमान्नेच्छां विना विरोधिनिश्चयात्तदापत्तिः ( कदाचिदिति ) यदि विशेषदर्शनं परिभूय यज्ज्ञानमुत्पद्यते तदधीनं स्मरणमपि विशेषदर्शनकालेऽनुभूयते तदेत्यर्थः ।

वस्तुतस्तु विशेषदर्शनकाले पूर्वज्ञातविरोधिविशिष्टज्ञानमेव स्मर्यते, न तु तद्विषयोऽविशिष्टम्, यावद्विशेषदर्शनेनाऽप्रामाण्यं गृह्यते । तथाच ज्ञानत्वमेव प्रतिबध्यतावच्छेदकम्, नत्वनुभवत्वम्, अनुभवत्वजातेरप्रामाणिकत्वात् । स्मृतिभिन्नज्ञानत्वस्य तथात्वे गौरवात् । प्रत्यक्षत्वस्य तथात्वमाशङ्कते ( नचेति ) समाधत्ते ( सामान्य इति ) सामान्यधर्मस्य ज्ञानत्वस्य तथात्वे बाधकाभावादित्यर्थः । ननु संशयानुमितेस्सन्दिग्धतया ज्ञानत्वस्य विरोधिपरामर्शाभावजन्यतावच्छेदकत्वकल्पनं न सम्भवति, व्यभिचारसंशयस्य विरोधित्वादित्यत आह ( बोध्याभावेति ) "शाब्दादी" त्यादिना उपमिति स्मृति परिग्रहः । तथाच ज्ञानत्वस्य तथात्वे शाब्दादिस्थले स्वतन्त्र प्रतिबन्धकत्वाकल्पनेन लाघवात् व्यभिचारसन्देहोऽकिञ्चित्कर इति भावः । ननु तद्व्याप्यवत्ताज्ञानस्य तदभावव्याप्यवत्ताज्ञाने उत्तेजकत्व मान-

अथ विशेषान्तर दर्शनविरह विशिष्टमेव तत्तथा, अन्यथा कोटिद्वयविशेषदर्शने संशये नस्य।दिति चेत् ; न भवत्येव तावथायदप्रामाण्यं न गृह्यते, अगृहीताप्रामाण्यस्यैव विशेषदर्शनस्य विरोधित्वादिति ।

---

इयकम्, अन्यथा कोटिद्वयव्याप्यदर्शनदशायां प्रत्यक्षात्मकस्यापि संशयस्योत्पादासम्भवात्तदानीं संशयानुभवापलापप्रसङ्गादिति सत्प्रतिपक्षसंवलनदशाया मुत्तेजकसत्त्वेन संशयानुमिति र्निष्प्रत्यूहैवेत्याशङ्कते ( अथेति ) ( यावद प्रामाण्यं न गृह्यत इति ) तथा चानयो रेकतर स्मित्यादिरीत्या सामान्यत स्तत्राप्रामाण्यग्रहे विशिष्योभयत्रैवाप्रामाण्यसंशयेन प्रत्यक्षसंशयो भवतीति भावः । एतदुपपादकनेव हि ( अगृहीताप्रामाण्यस्यैवेति ) अप्रामाण्यसंशया दनुमिति स्संशयरूपा न सम्भवत्येव, अगृहीताप्रामाण्यकपरामर्शरूप फलसकारणविरहात्कारणान्तरस्य च कल्पकाभावात् ।

मिश्रास्तु तद्व्याप्यदर्शनस्य तदभावव्याप्यदर्शनप्रतिबन्धकतायामुत्तेजकत्वेऽपि प्रत्यक्षसंशयव दुभयव्याप्यदर्शनात्संशयानुमिति रुत्पद्यते । यतो व्याप्यदर्शन मवधारणात्मकज्ञान एव हेतुः, अवधारणत्वं चानुमितौ व्याप्यदर्शन जन्यप्रत्यक्षेच स्वीक्रियते । अवधारणद्वयसामग्रीसमाजाच्च न संशयः, [तथा च निश्चय नमेवा वधारणत्वं] अवधारणत्वस्य संशयव्यावृत्ततया तत्कोट्यवधारणे तद्विरोधिके।ऽयवधारण जनकविशेषदर्शनस्य प्रतिबन्धकतया विरोधिकोटिद्वयावधारणसामग्रीसंवलनस्या सम्भवात्, तादृशप्रतिबध्यप्रतिबन्धकभावा कल्पने उभयकोटिव्याप्यदर्शनकाले उभयकोट्यवधारणापत्तेः । न चेष्टापत्तिः, तत्र संशयस्यैवेतोऽस्या ऽवधारयामीतिप्रतीत्यननुभवात् । तादृशकोटिद्वयविशेषदर्शनकाले चैकविशेषदर्शनस्या परविशेषदर्शनेना प्रयोजकीकृतत्वात् । विशेषदर्शनदशायां विशेषणज्ञानादि घटित यादृशसामग्रीसमाजा प्रत्यक्षसंशयः तादृशस्य तत्राप्यक्षतत्वाद्भवति संशयात्मकं प्रत्यक्षम् अनुमिति स्थलेच [ या सामग्री फलसा सावधारणत्वप्रयोजिका

अवधारणसामग्र्यतिरिक्ता सामग्री न कल्प्यते, प्रयोजनाभावात्, इति कः संशयानुमिते वार्तेत्याहुः ।

तेषामयमाशयः, अवधारणत्वं न निर्णयत्वम्, विरोधिकोट्यनुपस्थितिकालीन विशेषदर्शनाधीन निर्णयानन्तरमवधारयामीति प्रतीत्यनुदयात् । किन्तूत्कटनिश्चयत्वम् उत्कटत्वञ्च विषयताविशेष एव, अन्यस्य दुर्वचत्वात् । स एव च प्रत्यक्षानुमितिसाधारणो व्याप्यदर्शनजन्यतावच्छेदको विरोधिव्याप्यदर्शनप्रतिबध्यतावच्छेदकश्चेति ।

अत्र च निश्चिनोम्यवधारयामीति प्रतीत्योः समानविषयतया निश्चयत्वमेवावधारणत्वम्, अनभ्यासदशापन्न ज्ञानाद्विशेषदर्शनकालीनज्ञाने अप्रामाण्यशङ्कानास्कन्दनमेव विशेषः । निश्चयत्वस्यानर्थसमाजग्रस्तताऽव्यवस्थापितेति तत्र न दीधितिकृतो निर्भरः ।

इदन्त्ववधेयम्, विरोधिज्ञानदशायामाहार्यज्ञानोपपत्तये यदि निरुक्तमनाहार्यत्वं प्रतिबध्यतावच्छेदककोटौ निवेश्यते तदा तस्याव्यवहितोत्तरत्वघटिततया अव्यवहितोत्तरत्वस्याननुगतस्य दुर्वचतया इच्छाव्यक्तिसमसंख्यकभेदनानिवेशनीयतया महागौरवम्, इच्छायां आहार्यज्ञानसामग्रीघटकतानिर्वाहाय तस्यास्तद्धेतुताधिक्यं चेति इच्छाया उत्तेजकत्वपक्ष एव समुचितः ; तथाच न प्रत्यक्षशाब्दादिसाधारणबुद्धौ प्रतिबन्धकतैक्यसम्भवः, विरोधिज्ञानदशायाश्चाक्षुषत्वादिप्रकारकेच्छाबलात्स्पार्शनाद्यनुत्पत्त्या तज्जातीयप्रत्यक्षेच्छानां विशिष्योत्तेजकतां स्वीकृत्य तज्जातीयप्रत्यक्षे पृथक्प्रतिबन्धकताया आवश्यकत्वात् । तथाचानुमितिस्थले पृथक्प्रतिबन्धकताया अप्रामाणिकत्वात्संशयानुमितिर्दुर्वारैव । यदि कथञ्चिदव्यवहितोत्तरत्वमनुगतं शक्यते निर्वक्तुम्, चाक्षुषस्पार्शनादिभेदेन प्रत्यक्षस्थले चाक्षुषादिगोचरेच्छाविरहविशिष्टविरोधिनिश्चयाभावत्वरूपगुरुधर्मावच्छेदेन कार-

णतापट्कस्य शाब्दोपमित्यो रिच्छाविरहाविशेषित विरोधिनिश्चयाभाव कारणताद्वयस्य च कल्पनापेक्षया तद्भेदेन चाक्षुषेच्छात्वादिरूप लघुधर्मपुरस्कारेण कारणताषट्कस्य इच्छाविशिष्टान्य बुद्धिसामान्ये विरोधिनिश्चयाभावस्यैक हेतुतायाश्च कल्पने लाघव मीक्ष्यते , तदा अव्यवहितोत्तरत्व सम्बन्धेन विरोधिनिश्चयानवच्छिन्नत्वमेव तत्प्रतिबध्यतावच्छेदक मङ्गीक्रियताम् । तथा सति दोषविशेषाजन्यत्वादेरप्यनिवेशनीयतया लाघवात् । तथाच उभय व्याप्यवत्तानिश्चय दशायां संशयानुमित्य रुपगमेऽपि तादृशप्रतिबन्धकाभाव व्यभिचारशङ्कानवकाशा द्विरोधिपरामर्शाभाव घटिताया एवानुमितिसामग्र्या अनुमित्युत्पाद प्रयोजकत्वोपगमात्संशयानुमिति र्दुर्वारैवेति ।

एतेन वह्न्यभाव व्याप्यवान्पर्वत इत्याकारकाश्रयासिद्ध्यादि निश्चयदशायां वह्निमान्पर्वतो घटवानित्याद्यनुमिति वारणाय वह्न्यादिप्रकारकानुमितावपि तदभावव्याप्यबुद्धेः प्रतिबन्धकत्व मावश्यकमिति न संशयानुमिति प्रसङ्ग इत्यपि निरस्तम् , तदभावव्याप्यवत्तानिश्चयस्य तदभावव्याप्यवत्तानिश्चयानवच्छिन्न बुद्धिप्रतिबन्धकत्वे फलानुरोधेन तद्विशिष्टलक्षकाद्यनुमिति सामग्र्यां तदभावव्याप्यवत्तानिश्चयाभावान्तर्भावेऽपि प्रयोजनविरहेण तद्धर्मकानुमिति सामग्र्यां तदन्तर्भावानुपगमात् ।

अत्राहुः अस्तु प्रत्यक्षस्थले विरोधिज्ञानप्रतिबन्धकतायामिच्छानामुत्तेजकत्वं, तथापि परोक्षशाब्दादिस्थले प्रत्यक्षान्यत्व सहितस्य ज्ञानत्वस्य प्रतिबध्यतावच्छेदकत्व मङ्गीक्रियते, नतु शाब्दत्वादे र्नानाधर्माणामिति न संशयानुमिति प्रसङ्गः । ननु प्रत्यक्षान्यत्वज्ञानत्वयोरेकविशिष्टापरस्यैवा वंते प्रसक्तस्यावच्छेदकत्व मङ्गीकार्यम् , तत्र च विशेषणविशेष्यभावे विनिगमनाविरह इति वाच्यम् ; प्रत्यक्षान्यत्ववैशिष्ट्यस्य गुणत्वादिसाधारणतया तन्मात्रेण ज्ञानत्वस्य निवेशे इतरव्यावृत्त्यसम्भवा ज्ज्ञानत्वस्य विशेष्यत्वे वि-

शेष्यतावच्छेदकतया ज्ञानत्वत्वस्यापि निवेशनीयतया गौरवेण स्वतो व्यावृत्तज्ञानत्व विशिष्टप्रत्यक्षान्यत्वस्यैवा ऽवच्छेदकत्वादिति ।

अन्ये तु महानसीयत्व विशिष्टतया वह्नित्व धर्मविशिष्टतया महानसस्य वह्न्यभावादेः प्रतियोगितायां यथा धर्मिविशेषणतापन्नेषु महानसीयत्व वह्नित्वादि नानाधर्मेषु मिथो विशेषणविशेष्यभावानापन्नेष्वेवा वच्छेदकत्वम्, प्रत्यक्ष तादृशधर्माणामतिप्रसक्तत्वेपि यत्रैकस्मिन्नवच्छेद्ये नानाधर्माणामवच्छेदकत्वं तत्राव च्छेदकसमुदायातिप्रसक्त्यैवा वच्छेदकता निर्वाहः ; अवच्छेदकस्य विशेषणसम्बन्धाद्विभेदेना वच्छेदकतया भेदेपि नावच्छेद्यभेदः, अवच्छेद्यप्रतीतावव च्छेदक प्रकारकविषयताभेदेनैव तद्भेदात् ; महानसीय वह्नेर्नास्तीति प्रतीतौ च नानाधर्म प्रकारकसमूहालम्बन न्याय वह्न्यादिविषयताया ऐक्यात् ; तथा प्रकृतेपि धर्मिविशेषणतापन्न मिथोविशेषणविशेष्यभावानापन्न प्रत्यक्षान्यत्वज्ञानत्वयोः प्रतिबध्यतावच्छेदकत्वम्, अतो न विनिगमनाविरहात् प्रतिबध्यतादिभेद इत्याहुः । तन्न, प्रत्यक्षान्यत्व सहितज्ञानत्वेन धर्मिणो युगपज्ज्ञाने एकतरस्यापि धर्मितावच्छेदकत्व भानमावश्यकम्, समूहालम्बन विलक्षण निर्धर्मितावच्छेदककभवभानस्या प्रामाणिकत्वादिति प्रत्यक्षान्यत्व धर्मितावच्छेदकतापन्न ज्ञानत्वप्रकारिकाया ज्ञानत्वधर्मितावच्छेदकतापन्न प्रत्यक्षान्यत्व प्रकारिकायाश्च धर्मिविषयताया भेदेन प्रतिबध्यताभेदस्या वश्यकत्वात् ।

( केचित्तु - वह्नित्वाभावत्वाभ्यां व्यापकताप्रकारके महानसीयवह्नित्व तादृशवह्न्यभावत्वप्रकारेणानुमिति प्रयोजकलाघवज्ञानवशादत्र सत्प्रतिपक्षभाव स्तत्र संशयानुमिति र्नतदभ वव्याप्यवत्ताबुद्धिविरोधित्वेन शक्यते वारयितुम्, शुद्धवह्नित्वावच्छिन्न शुद्धाभावत्वावच्छिन्नव्याप्यधियो महानसीयवह्न्यभावमहानसीयवह्नि विशिष्ट बुद्ध्यविरोधित्वात् । नच लाघवज्ञानघटित

तद्विरोध्यनुमितिसामग्रीकाले तत्प्रत्यक्षशाब्दादिवारणाय तत्र तादृशसामग्र्याः प्रतिबन्धकत्वं कल्पनीयं अनुमितिसाधारणस्य तद्विशिष्टजिज्ञासानवच्छिन्न तद्विशिष्टधीत्वस्यैव प्रतिबध्यतावच्छेदकत्वोपगमात् न संशयानुमितिप्रसङ्ग इति वाच्यम् । लाघवज्ञानघटित शुद्धाभावत्वादिप्रकारकानुमितिसामग्र्या व्यापिकायाः प्रतिबन्धकतयैवोपपत्तेः प्रत्यक्षादौ लाघवज्ञान मन्तर्भाव्य सामग्रीप्रतिबन्धकत्वान्तरस्यैवासिद्धेः, तथा च नोक्तानुमितिवारणसम्भवः ; तत्प्रतिबध्यतावच्छेदककोटौ महानसीयवह्नित्वावच्छिन्न विषयकानुमितित्वन्य तादृशज्ञानत्वस्यैव निवेशनीयत्वात् । अभावत्वान्महानसीयवह्निमा नित्यनुमित्युत्पत्त्या शुद्धाभावत्वावच्छिन्नप्रकारकानुमितिसामग्र्या महानसीयवह्नित्वावच्छिन्नप्रकारकानुमित्यप्रतिबन्धकत्वात् । यदि च लाघवज्ञानजन्य महानसीयवह्न्यभावत्वादिप्रकारकानुमितौ महानसीयवह्न्यभावत्वादिकमपि विधेयतावच्छेदकम्, तथा च शुद्धाभावत्वादिप्रकारकसिद्धिदशायां शुद्धाभावत्वावच्छिन्न विधेयकानुमितिसामग्र्या असत्त्वात्तदानीमेव लाघवज्ञानसत्त्वे तत्प्रत्यक्षादिवारणाय लाघवज्ञानघटितसामग्र्याः प्रतिबन्धकत्वान्तरकल्पन मावश्यक मित्युच्यते ; तदापि लाघवज्ञानघटित विरोधिकोटिद्वयानुमितिसामग्री संवलनदशायां भवन्मते प्रत्यक्षशाब्दबोधाद्युत्पत्त्या एककोटिसामग्र्या मपरकोटिसामग्र्यभावनिवेशस्यावश्यकतया कथं तत्प्रतिबन्धकतया संशयानुमितिवारणसम्भवः । एतेन विरोधिविषयकनिश्चयानन्तरमिव तत्सामग्र्यनन्तरमपि इच्छाबलात्परोक्षज्ञानं नोत्पद्यते, एवञ्च लाघवज्ञानघटित विरोधिकोट्यनुमिति सामग्रीदशायामिच्छासत्त्वेऽपि न शाब्दबोधादि रुत्पद्यते, किन्तु विरोधिकोट्यनुमितिरेवेति, फलानुरोधेन इच्छाभावं प्रतिबन्धके इच्छानवच्छिन्नत्वञ्च प्रतिबध्ये विशेषण मनिवेश्य लाघवज्ञानघटितविरोध्यनुमितिसामग्र्याः परोक्ष तद्विशिष्टज्ञाने प्रतिबन्धकत्वान्तरकल्पन मावश्यकमिति तत्प्रतिबध्यतावच्छेदं.

कस्य परेङ्गितत्वस्यानुमितिसाधारण्यात्प्रोक्तस्थले संशयानुमितिप्रसङ्ग इत्यपि निरस्तम् । विरोधिविषयकनिश्चयसामग्रीदशायां विच्छावशात्संशयो ज्ञानानुत्पादस्याऽप्रामाणिकत्वञ्चेत्याहुः ।)

अत्र हुः संशयसमुच्चययोर्विरोधभानाभानप्रयुक्त वैलक्षण्यस्य दुर्वितरत्वात् संशयत्वस्य विषयिताविशेषरूपत्व मावश्यकम् । तादृशविषयिताच कोटिनिरूपित, कोट्युपरागेणैव सन्देह्मीति प्रतीतेः । तत्तत्कोटिनिरूपित विषयिताविशेषभिन्न तत्तत्कोटि विषयिताशालित्वं तत्तत्कोटिनिश्चयत्वम् । तथाच निश्चयत्वघटक विषयितायास्संशयसाधारणत्वे तत्रापि निश्चिनोमीति प्रतीत्यापत्तिरिति तस्यास्तद्व्यावृत्तत्व मावश्यकम् । तन्निर्वाहश्च संशयसामग्र्या स्तादृशविषयिताशालिज्ञानप्रतिबन्धकतयैव स्युक्तलाघव ज्ञानघटित सामग्रीद्वयात्संशयस्वीकर्तॄणामपि निश्चयत्वघटकनिरुक्तविषयिताया स्तादृशसंशयव्यावृत्त्यर्थं लाघवज्ञानघटितविपरीतकोट्यनुमितिसामग्र्या स्तत्कोटिनिरूपित तादृशविषयिताशालिज्ञान प्रतिबन्धकत्व मावश्यकम् । तथाच लाघवात्संशयत्वघटक विषयिताभेद मनिवेश्यैव तत्कोटिप्रकारकत्वस्य तादृश सामग्रीनिरूप्यतावच्छेदकत्वोपगमा ल्लोकसामग्रीद्वयात् संशयानुमितिः । नच संशयत्वघटककोटिप्रकारित्व भिन्नतत्कोटिप्रकारिताक ज्ञानत्वं न तत्कोटिनिश्चयत्वम्, अपितु तादृशप्रकारिताशून्य तत्कोटिप्रकारकज्ञानत्वम् । तथाच संशये निश्चयवृत्तिविषयितास्वीकारेपि न क्षतिरिति वाच्यम् । एकधर्मावच्छिन्ने तत्कोटिसंशयरूपस्यान्यधर्मावच्छिन्नांशे तत्कोटि निश्चयस्य संग्रहाय तत्तद्धर्मावच्छिन्न विशेष्यतानिरूपित विलक्षण विषयिताशून्यत्वस्य तत्तद्धर्मावच्छिन्न विशेष्यक निश्चयत्वशरीरे निवेशनीयतया धर्मितावच्छेदक निष्ठप्रत्यासत्त्या कारणत्वप्रतिबन्धकत्व पक्षीयलाघवस्य विलयप्रसङ्गादिति ।

परेतु-ग्राह्याभावेऽव्याप्यवृत्तित्वज्ञानदशायां ग्राह्याभावनिश्चयविषये धर्मिणि ग्राह्यज्ञानोत्पत्त्या यथा तादृशाव्याप्यवृत्तित्वग्रहस्य तत्प्रतिबन्धकताया

उत्तेजकत्वम् , तथा तद्धर्मिकाव्याप्यवृत्तित्वग्रहदशायां तद्वय[illegible]क्षा निश्च यस्यापि तद्विषयतज्ज्ञाना प्रतिबन्धकतया तत्रापि तद्धर्मिका व्याप्यवृत्तित्वग्रह स्योत्तेजकत्वमुपेयम् । एवञ्च कपिसंयोग तदभावयो दैशिकाव्याप्यवृत्तित्व ग्रहदशायां पक्षतावच्छेदकशाखादिरूपैक देशावच्छेदेन तदुभयकोटिमत्त्वा दिक मवगाहमाना गन्धतदभावयोः कालिकाव्याप्यवृत्तित्व ग्रहदशायां पक्ष- तावच्छेदक तत्क्षणावच्छेदेन तदुभयकोटिमत्त्व मवगाहमानाच संशयानुमितिः ग्राह्याभाववत्व्याप्यवत्ताज्ञान प्रतिबन्धकतया न शक्यते वारयितुम् । नचाव्या प्यवृत्तित्वज्ञानस्य संशयविरोधितया अव्याप्यवृत्तित्वज्ञानफले समुच्चय एव भवति नतु संशय इति वाच्यम्, यतो विरोधिग्रह एव व्याप्यवृत्तित्वग्रहस्य विरोधितया कोट्योर्विरोधावगाहि संशय एव तयोरव्याप्यवृत्तित्वग्रहदशायां न संभवति, विरोधानवगाहिन एकदेशावच्छेदेन एककालावच्छेदेन वा कोटिद्वयमवगाहमानस्य संशयस्य तदानीमुत्पत्तौ बाधकाभावः । नहि तद्द- शाज्ञानं कोटिद्वय निश्चयरूपं भवति, समानदेशकालावच्छेदेन तत्तदभाव निश्चययोरव्याप्यवृत्तित्वग्रह कालीनयोरपि मिथो विरोधित्वात् । अव्याप्यवृत्ति त्वेपि भावाभावयो रेकदेशावच्छेदेन वृत्तेरसम्भवात् । अव्याप्यवृत्तितया तादृशनिश्चययो र्विषयविरोधापरिहारात् । नच यदि तत्तद्देशावच्छेदेन तदभावनिश्चय स्तदवच्छेदेन तद्विशिष्टबुद्धि ग्राह्याभावभागिक व्याप्यवृत्तित्व ग्रहदशायामपि प्रतिबध्नाति तदा तादृशव्याप्यवृत्तित्वग्रहदशायामेवा वच्छे- दकावच्छेदेन ग्राह्याभाव व्याप्यवत्ताज्ञानमपि तादृशानुमितिं निरुन्ध्यात् ; तथाचावच्छेदकावच्छेदेनानुमिता ववच्छेदकावच्छेदेन हेतुमत्ता परामर्श- स्यैव हेतुतया तादृशयोश्च परामर्शयोरवच्छेदकावच्छेदेन विपरीतसाध्यव- त्ताज्ञान प्रतिबन्धकतया नोक्तसंशयानुमिति सम्भव इति वाच्यम्; अवच्छे दक सामानाधिकरण्येन हेतुमत्ताज्ञानादपि देसकलरूप पक्षताव च्छेदके बाधाभावबला त्स्वरूप सम्बन्ध रूपावच्छेदकत्व मवगाह मानाया अनुमिते र्मणिकारसंमतत्वात् । वस्तुतो ग्राह्याभावस्या-

साध्यतदभावयोर्विरोधेन यथैकज्ञानस्यापरधीप्रतिबन्धकत्वम्, तथा साध्याभावव्याप्यवत्त्वस्यापि साध्यविरोधित्वात्तद्बुद्धेरपि साध्यधीप्रतिबन्धकत्वात् । विरोधिज्ञानत्वस्य प्रतिबन्धकत्वतन्त्रत्वात् । निबन्धेतु

---

व्याप्यवृत्तित्वेपि तदवच्छेदकावच्छेदेन प्रमात्वसम्भवात् द्विविधविरोधेनावच्छेदकावच्छेदेन विशिष्टबुद्धौ तदवच्छेदेन प्रमाभावाभावाज्ञानप्रतिबन्धकतायामेव तद्धर्मिकाऽव्याप्यवृत्तित्वग्रहाभावो नापेक्षितः । तादृश तद्व्याप्यवत्ताज्ञानस्य तादृशविशिष्टबुद्धिं प्रत्यविरोधित्वेतु तादृशाव्याप्यवृत्तित्वग्रहाभावोपेक्षित एव । ग्राह्याभावस्याव्याप्यवृत्तित्वे ग्राह्यावच्छेदकावच्छेदेन ग्राह्याभाववति वर्तमानस्यापि तद्व्याप्यतया विषयविरोधविरहात् । साध्यानवच्छेदकावच्छेदेन साध्यवति वर्तमाने यद्देशकालावच्छेदेन यत्र साधनं तद्देशकालावच्छेदेन तत्र साध्यमिति व्याप्तिर्न सम्भवतीति चेत्? का क्षतिः, न हि पक्षतावच्छेदकदेशकालावच्छेदेन साध्यानुमितौ तदवच्छेदेन गृहीततादृशव्याप्तिकहेतुमत्तापरामर्श एव हेतुरितिव — च्छेदकावच्छेदेनाऽनुमितिस्थलेऽसिद्धिव्यभिचाराऽसंकीर्णबाधस्य हेत्वाभासत्वं व्यवस्थापितवतो मणिकारस्यानुमतम्? तथा सति तल्लिङ्गपरामर्शात् भ्रमानुमित्यसम्भवेन बाधे दोषान्तरसंकरस्य दुर्घटत्वात् । तथा च अवच्छेदकदेशकालाघटिता प्रतियोग्यव्यधिकरण हेतुसमानाधिकरणाभावाघटिता व्याप्तिरपि तन्मतेऽवच्छेदकावच्छेदेनानुमितिप्रयोजिका । तादृशव्याप्त्यवगाहिनेऽवच्छेदकावच्छेदेन हेतुमत्तापरामर्शस्यापि विपरीतकेऽनुमितिप्रतिबन्धकत्वे ग्राह्याभावधर्मिकाव्याप्यवृत्तित्वज्ञानाभावोप्यपेक्षित इत्यवच्छेदकावच्छेदेन हेतुमत्तापरामर्शस्य तदवच्छेदेन साध्यानुमितावपेक्षितत्वेपि दर्शितरीत्या संकीर्णानुमित्युपपत्तिरिति । *)

हेत्वाभासानां फलद्वारकं लक्षणम् । अनैकांतिकाना मन्वया द्व्यतिरेकाद्वा कोट्युपस्थापकतया संशयः फलम् विरुद्धस्य साध्यविपरीतज्ञानम् । अपक्षधर्मोऽपि विरुद्धो-ऽन्यत्र विपरीतज्ञानम ऽर्थ एव । बाधेऽप्यतोपि विपरीत-ज्ञानं नतु हेत्वभिन्नतादेव । नित्यो घटः कार्यत्वादिति विरुद्धे बाधसंकरेप्यदोषः असिद्धे अनैकान्तिकादि चतु-ष्टयज्ञानान्यमात्राधीनं

---

( विरुद्धस्येति ) साध्याभावव्याप्यस्येत्यर्थः ।

---

मूले ( अन्वयाद्व्यतिरेकाद्वेति ) कोटिद्वयसहचरितत्व ज्ञानान्निश्चित कोटिद्वयव द्व्यावृत्तत्वज्ञानाद्वेत्यर्थः । व्यभिचरित विकल्पोयं साधारणा सा-धारणभेदेन । " विरुद्धस्य " इत्यत्र साध्यासमानाधिकरण्यरूप विरोधविश क्षणे ऽवृत्तेरपि विरुद्धरूपतया तस्यचापक्षधर्मस्य न साध्य विपरीतानुमितिः फलमित्यसङ्गति रित्यतोन्यादृशं विरोधं दीधितिकृदाह ( साध्याभावव्याप्य स्येति ) अपक्षधर्मस्यच विरुद्धस्य प्रकृतपक्षे साध्यविपरीतानुमापकत्वासम्भ-वेपि न क्षतिः, साध्यविपरीतानुमितौ प्रकृतपक्षकत्वाविवक्षणादित्याह मूले-( अपक्षधर्मोपीति ) " अन्यत्र "- प्रकृतपक्षभिन्ने स्वाधिकरणे । ह्रदो व-ह्निमान् धूमा दित्यादा ह्रदत्वादिहेतोः पक्षे साध्यविपरीतज्ञानसम्भवेप्यविरुद्ध धूमादे र्न तत्फलमिति नातिप्रसङ्गः । यस्य तत्फलं स विरुद्ध एवेत्याह (बाध इति) साध्याभावसाधकबाधितहेतो र्लक्ष्यतया उक्तफलघटित विरुद्धलक्षणा तिव्याप्तिशङ्कां निराकरोति ( नित्य इति ) घटो नित्य इत्यभिधाने अकार प्रश्लेषणाऽनित्यत्वसाध्यकत्वभ्रम स्स्यादिति प्रथमं साध्योत्कीर्तनम् । ( अ-सिद्ध इत्यादे ) व्यभिचारादि दोषचतुष्टयज्ञानान्य मात्राधीनम्—फलत

लिंगत्वज्ञानम्। बाधे पक्षधर्मे हेतौ व्याप्तिबाधः। प्रकरण-समे तु न व्याप्तिपक्षधर्मताबाधः फलम्। नाप्यलिंगत्वज्ञानं

---

( बाध इति ) " हेतौ " प्रकृतेऽन्यत्र वा । अपक्षधर्मे च पक्षधर्मता-बाध इति शेषो वा । तथा च हेतौ व्याप्तिपक्षधर्मतान्यतरबाध इत्यर्थः ।

---

स्तज्ज्ञानं नवीनम्, " अलिङ्गत्वज्ञानम् " असाधकत्वज्ञानम्, अपि तु दोषस्य ज्ञातस्य फलमित्यर्थः । तथाच तादृश दोषवत्त्व मसिद्ध्यादेराभास लक्षणं फलभिन्नमिति भावः । " पक्षधर्मे हेतावि " त्यत्र हेतुपदस्य प्रकृतहेतुपरत्वे अपक्षधर्मव्याप्य प्रकृतहेतुकबाधस्थले व्याप्तिबाधासिद्धिरूप तत्फलासम्भवात् तत्फलघटितलक्षणाव्याप्ति रतो हेतुपदस्य प्रकृताप्रकृतसाधारण हेतुमात्रपरतां दर्शयितुमाह- ( हेतौ-प्रकृते न्यत्र वेति ) तथाच हृदो वह्निमान् धूमादित्यादावपि साध्याभाववत्पक्षघटितेन सद्वृत्तिहेतुना द्रव्यत्वादिरूप हेत्वन्तरे व्याप्तिबाधानुमिति सम्भवा ल्लक्षणसमन्वय इति भावः । यद्यपि प्रकृतहेतौ नैतत्फलमिति तत्फलकत्वं न बाधितहेतौ लक्षणम्, तथापि तत्फलकदोषवत्त्वं तल्लक्षणमिति नानुपपत्तिः । हेतुपदस्य प्रकृताप्रकृतसाधारण हेतुपरत्वे तदुपादानमफलम्, अव्यावर्तकत्वादिति पक्षधर्मे व्याप्तिबाध इत्येवोच्यते, अतः प्रकृतहेतुपरमेव तद्वाच्यमित्याशयेनाऽपक्षधर्मप्रकृतहेतुक बाधस्य फलान्तरं पूरयति ( अपक्षधर्मे चेति ) अत्र प्रकृतहेत्वर्थकं हेताविति पूर्वोक्तमनुषञ्जनीयम् । एतत्कल्पे फलाननुगमात्तद्घटितलक्षणेऽव्याप्तिमाशंक्यान्यतरत्वेन तत्फलानुगमे मूलाभिप्राय इति दर्शयति ( तथाचेति ) ( हेताविति ) प्रकृत इत्यादिः । व्याप्तिभङ्गे साध्ये साध्याभाववत्पक्षवृत्तित्वं हेतुः, पक्षस्य साध्याभाववत्त्वेनैव निवेशः, ननु पक्षतावच्छेदकस्यापि तत्र प्रवेश इति न

व्याप्त्यादिबुद्धिमत्त्वात् । नापि विपरीतबुद्धिः, स्वसाध्यविपरीतेनानियमात् । नापि संशयः, प्रत्येकं कोटिद्वयानुपनयात् । किंतु कथमत्र तत्त्वनिर्णय इति जिज्ञासाफलम् । तथाच प्रकृतसाध्यहेत्वोः किं तत्त्वमिति जिज्ञासाजनिका व्याप्तिपक्षधर्मतोपस्थितिः

---

(प्रकृतेति) प्रकृतसाध्ययो र्यौ हेतू तयो रित्यर्थः ।

---

व्यर्थ विशेषणता । पक्ष धर्मताभङ्गे साध्ये पक्षनिष्ठाभाव प्रतियोगिसाध्यव्याप्यत्वं हेतुः । अत्रापि साध्यस्य तादृशाभावप्रतियोगित्वेनैव निवेशः । हेतुद्वयमेव बाधघटितमिति बाधस्यान्यतरफलकत्वमुभयत्र । मूले ( व्याप्त्यादिबुद्धिसत्त्वादिति ) सद्धेतोरपि विरोधिपरामर्श दशायां सत्प्रतिपक्षत्व मत्र च व्याप्तिपक्षधर्मता प्रतीतिसत्त्वा दित्यर्थः । तथाच प्रकरणसमदोषस्य व्याप्त्यादिविरहोभावकत्वासम्भवादिति भावः । “ विपरीतबुद्धिः ”- स्वसाध्याभावानुमितिः । सत्प्रतिपक्षहेतोः फलमिति शेषः । ( स्वसाध्यविपरीतेना नियमादिति धूमादिहेतो वह्न्यायभावव्याप्यत्वा भावादित्यर्थः ( संशय इति ) कोटिद्वयोपस्थिति द्वारक साध्यसंशय इत्यर्थः ( कोटिद्वयानुपनयादिति ) स्वेन स्वसाध्यस्यैवोपस्थापनादिति भावः । ( इति जिज्ञासेति ) एतादृश तत्त्वनिर्णयोपायेच्छाफलिका जिज्ञासेत्यर्थः । अनयोः किन्तत्त्वमिति जिज्ञासेति यावत् । अतो नाग्रिमग्रन्थविरोधः । ननु स्वसाध्यव्याप्त्यादिमत्तयो परिचितयोर्हेत्वो रन्यतरस्य समीचीनत्व एव जिज्ञासा, तद्वक्ष्यति ‘अत्र हेतुसमीचीनत्व ’ इति, तथाच प्रकृतसाध्यहेत्वोरिति यथाश्रुत मसङ्गतम्, अतो दीधितिकृद्धेतुद्वयार्थकतया तद्व्याचष्टे ( प्रकृतसाध्ययोरिति ) “ किं तत्त्वमि ” ति मूलस्य कस्समीचीन इत्यर्थः । एतादृशजिज्ञासा प्रयोजकत्वं

प्रकरणसमः । नह्यनुपस्थिते प्रतिपक्षे एकस्माज्जिज्ञासा, किंतु निर्णय एव ।

अथ ज्ञातुमिच्छा जिज्ञासा, सा च ज्ञानेष्टसाधनता ज्ञानात् संशयाद्वेति कथं तेन विना विरोधि

---

(संशयादिति) तज्जन्यदुःखोत्सारणरूपेष्टसाधनताज्ञानात्, प्रयोजकत्वं समीचीनत्वं संशयादिसाधारणम्, अत स्तद्वारणाय (व्याप्तिपक्षधर्मतोपस्थितेरिति) उदासीनव्याप्त्याद्युपस्थितिवारणाय विशेषणद्वयम् । नच व्याप्त्यादे रननुगमा त्सर्वसाधारणरूपेण तदुपस्थिति निवेशासम्भवा द्विशिष्य प्रकृतसाध्य तदभावव्याप्त्याद्युपस्थिति निवेशस्यावश्यकत्वेन जनकान्तरवैयर्थ्यमिति वाच्यम्, अनुमिति चरमकारणत्वेन व्याप्त्याद्यन्तरोपस्थिति साधारणेन तन्निवेशसम्भवात् । यादृशपरामर्शसहकारेण यादृशपरामर्शस्योक्त जिज्ञासाजनकत्वं तादृशपरामर्शनिवेशात् जिज्ञासास्वरूपयोग्यैकतर परामर्शदशायां नातिप्रसङ्गः । (प्रकरणसम इति) दोष इति शेषः । प्रकृतसाध्यव्याप्यपरामर्श तदभावव्याप्यपरामर्शयोर्जिज्ञासाजनने मिथस्सहकारितां व्यवस्थापयति (नह्यनुपस्थित इति) असतीत्यर्थः ।
" प्रतिपक्षे "- विरोधिपरामर्शान्तरे । " एकस्मात् "- परामर्शात् । " निर्णयः "- एकतर साध्यस्यैकतरसमीचीनत्वस्य वा निर्णयः । फलोपधान गर्भलक्षण मेकपरामर्शदशायां नातिप्रसक्तमित्येतत्परता " नही " त्यादेर्नेयुज्यते, जिज्ञासोपधानस्यानियमेन तद्घटितलक्षणस्याव्याप्त्या विवक्षणासम्भवात् ।

ननु-" इष्टसाधनता ज्ञानात्संशयाद्वे " ति विकल्पोऽसङ्गतः ज्ञानगोचरेच्छायां तादृशेष्टसाधनताज्ञानस्य सर्वत्रैव हेतुतया संशयकत्वे तत्करण व्यवच्छेदायोगा दित्यत इष्टभेदाभिप्रायकतया विकल्पं सङ्गमयति (तज्जन्येति) संशयजन्येत्यर्थः । संशयजन्यस्य दुःखस्य, उत्सारणम्-कारणी-

**व्याप्ति पक्षधर्मताज्ञानाभ्यामग्रिमव्याप्तिविशिष्टज्ञानोत्पत्ति काले पूर्वपरामर्शनाशात् ।**

---

उत्पत्तिकाले-उत्पत्तिपूर्वकाले । व्याप्तिपक्षधर्मताज्ञानयो रुत्पादकक्रमानियमादुभयोर्नाशकत्वमुक्तम् । उत्पत्तावेव वा तयो रन्वयः । अत्र च व्याप्तिपक्षधर्मतयोः समूहालम्बनं तत्र द्वितीयपरामर्शोत्पत्तिकाल एव प्रथमपरामर्शनाशः ।

---

एकपरामर्शानन्तर मपरपरामर्शजनक व्याप्तिज्ञानपक्षधर्मताज्ञानयोर्द्वयोः क्रमेणैवोत्पत्तिः, तथा च प्रथमपरामर्शे चतुर्थक्षण एव परामर्शान्तरोत्पत्तिः, तदानीञ्च पूर्वपरामर्शनाशो नोत्पद्यते, अपितु स्वद्वितीयक्षणोत्पन्न विशेषगुणतृतीयक्षण एवेत्युत्पत्तिकालपदं तत्पूर्वकालपरतया व्याचष्टे दीधितौ-(उत्पत्तीति) "नाशा" दित्यतः नाशोत्पत्तिप्रतीतिरौत्सर्गिकीत्याशयेनेदं व्याख्यानम् । नाशांसस्यार्थकत्वेतु यथाश्रुतमेव सङ्गच्छते । अन्तरोत्पन्नस्यैव च गुणस्य नाशकत्वेनैकत्रोभयोर्व्याप्तिपक्षधर्मताज्ञानयोः पूर्वज्ञाननाशकत्वासम्भवात्, पृथक् स्थलीयनाशकत्वाभिप्रायकस्तथा ज्ञानाभ्यां विनाशादिति मूलं सङ्गमयति ( व्याप्तीति ) ( उत्पादकक्रमानियमादिति व्याप्तिज्ञानोत्तरमेव पक्षधर्मताज्ञानं तदनन्तरमेव व्याप्तिज्ञानमुत्पद्यत इति नियमाभावादित्यर्थः । (उभयोर्नाशकत्वमुक्तमिति ) उक्तज्ञानयोर्यज्ज्ञानं प्रथमतो यत्रोत्पद्यते तत्र तस्य नाशकत्वादिति भावः । "विशिष्टज्ञानोत्पत्तिकाल" इत्यत्रोत्पत्तौ तादृशज्ञानयोर्हेतुत्वेनान्वये एकत्रैवोभयहेतुत्वान्वय योग्यतानिर्वाहात् किं स्थलभेदानुसरणेनेत्याशयेनाह ( उत्पत्तावेवेति ) व्याप्ति पक्षधर्मताविषयकैक ज्ञानस्थलेऽपि परामर्शयोर्यौगपद्यं न सम्भवतीति न्वयमाह ( अत्र चेति )

नचोभयहेतुव्याप्तिपक्षधर्मताज्ञानानां परस्पराप्रतिबन्धकत्वात्परामर्शोत्पाद इति वाच्यम्, व्याप्त्यादिज्ञानचतुष्टय यौगपद्याभावात्। यत्तु- व्याप्तिद्वयसंस्कारोद्बोधकहेतुद्वय ज्ञनयोः परस्परप्रतिबन्धा न्नोभयव्याप्तिस्मृतिरिति दूषकतावीजम्; तन्न, व्याप्तिस्मृतिं विना सत्प्रतिपक्षाभावात्, वादिभ्यां व्याप्त्युद्भावनाच्चेति। मैवम्- हेतुद्वयसमूहालम्बना युगपदुभयव्याप्तिस्मृतावुभयपरामर्शरूपं ज्ञान मुत्पद्यते। अत एकदा विरुद्धकार्यद्वय कारणान्नैकमपि कार्य-

मूले ( उभयहेतुव्याप्ति पक्षधर्मता ज्ञानानामिति ) परामर्शद्वयहेतुव्याप्तिपक्षधर्मताज्ञान चतुष्टयस्येत्यर्थः। "परस्परप्रतिबन्धकत्वात्" एकसत्वस्यापरसत्त्वाऽविघटकत्वात्। ( परामर्शोत्पाद इति ) व्याप्त्यादिज्ञान चतुष्टयाधीनस्यैकदा समूहालम्बनरूपस्याविरळक्रमेण वोभयव्याप्यवत्ताज्ञानस्योत्पाद इत्यर्थः। विशिष्टपरामर्शयोरेकदैवोत्पादस्तृतीयक्षणे च विनाशः, नेतरज्ञानस्य तन्नियम इत्यभिमानेनेय माशङ्का। अभिज्ञानं निराकरोति ( व्याप्त्यादीति ) "यौगपद्याभावात्" युगपद्वयस्यानासम्भवात्। ज्ञानमात्र एवोक्त नियमादिति भावः। "परस्परप्रतिबन्धात्"- परस्परजन्यव्याप्ति स्मृतिप्रतिबन्धकत्वात्। समूहालम्बन पक्षधर्मताद्वयज्ञाना त्समूहालम्बन रूपं व्याप्तिद्वयस्मरणम्, ततः समूहालम्बन मुभयव्याप्यवत्ताज्ञानं प्रतिरोधप्रयोजकमिति समाधत्ते ( मैवमिति ) स्वयं निर्वक्ष्यमाणस्य नित्यसत्प्रतिपक्षदोषस्य साध्याभावव्याप्यवत्पक्षरूपस्य केवला

मुत्पद्यते । तादृशपरामर्शश्च स्वार्थानुमाने प्रत्यक्षादितः, परस्य तु वाद्युपन्यस्त न्यायोत्थापित प्रमाणात् । अस्य केवलान्वयिन्यपि सम्भवः, घटोऽभिधेयः प्रमेयत्वादित्यत्रा भिधेयत्वं घटनिष्ठात्यन्ताभावप्रतियोगि, जात्यन्यत्वे सति घटमात्र वृत्त्यन्यधर्मत्वात्, घटान्योन्याभाववत् पटरूपवच्च,

---

"अस्य"- निरुक्तसत्प्रतिपक्षितत्वस्य ( जात्यन्यत्वेति ) सत्ता कम्बुग्रीवादिमत्त्वादावेकैकस्य व्यभिचारा द्विशिष्टोपादानम् ।

---

न्यविसाध्यके साध्याभावाप्रसिध्या असम्भवात् "अस्ये" ति मूलं निरुक्तव्यवहारौपयिकपरामर्श संवलनात्मक सत्प्रतिपक्षपरतया व्याचष्टे (अस्येति) अभिधेयत्वे द्वित्वाद्यवच्छिन्नाभावप्रतियोगित्वसाधारणरूपेण घटनिष्ठाभावप्रतियोगित्वज्ञानस्य विरोध्यविषयकत्वेन घटेऽभिधेयत्वज्ञानाप्रतिबन्धकतया तत्सामग्र्या न सामान्यतो भिधेयत्वानुमान प्रतिरोध इत्यभिधेयत्वमिति ग्रन्थस्याभिधेयत्वत्वपक्षक घटनिष्ठाभावप्रतियोगितावच्छेदकत्वसाधक जात्यवृत्तित्वविशिष्ट घटमात्रवृत्तितानवच्छेदकत्वलिङ्गकानुमाने तात्पर्यम्, दृष्टान्तौपि घटान्योन्याभावत्वं पटरूपत्वञ्च । दीधितौ " सत्ता कम्बुग्रीवादिमत्त्वादा " विति यथाश्रुतं यथाश्रुतमूलानुसारेण । यथाविवक्षितेतु सत्तादिपदं सत्तात्वादिपरम् ( एकैकस्येति ) केवलविशेष्य केवलविशेषणयो रित्यर्थः । ननु " घटनिष्ठात्यन्ताभाव " इत्यन्तेन प्रसिद्धपटत्वाद्यभावविवक्षणे तत्राभिधेयत्व प्रतियोगिकत्वस्य बाधात् साधनसम्भवः, अभिधेयत्वाभावस्य चाप्रसिध्या

घटनिष्ठात्यन्ताभावोऽभिधेयत्वप्रतियोगिकः, घटवृत्तिनित्याभावत्वात्, घटनिष्ठान्योन्याभाववदिति विशेषादर्शनदशायां। नच पक्षैक्यमपि तन्त्रम, विरोधस्यैव

---

(घटनिष्ठेति) घटनिष्ठात्यन्ताभावत्वेन सामान्यतः पक्षत्वाच्च नाश्रयासिद्धी।

---

न पक्षत्वसम्भव इत्याशङ्कां निरसितुमाह (घटनिष्ठेति) उभयमतप्रसिद्धे नेत्यादिः। "सामान्यतः"- सामान्यरूपेण (न बाधेति) सामानाधिकरण्यमात्रेण साध्यसिद्धे रुद्देश्यत्वाभ्युपगते बाधो दोषः। अभावस्य कस्यचिदभिधेयत्व प्रतियोगिकत्वमपीति विवादे पक्षतावच्छेदकावच्छेदेन बाधो दुर्निश्चेयः, पक्षतावच्छेदकप्रसिद्ध्यैव नाश्रयासिद्धिरित्यर्थः। ननु स्वरूपसम्बन्धेनाऽभिधेयत्वत्वावच्छिन्नसाध्यकानुमितौ पक्षनिष्ठाभावे तत्सम्बन्धावच्छिन्न विषयिताभिधेयत्वत्वावच्छिन्न प्रतियोगिकत्वानुमितिरेव विरोधिनी, तादृशं च साध्यमप्रसिद्धम्; नच—घटनिष्ठस्वरूपसम्बन्धावच्छिन्न प्रतियोगिताकाभावत्वेन पक्षत्वादुद्देश्यसिद्धिः, स्वरूपसम्बन्धावच्छिन्न गगनाद्यभावस्य संयोगादिसम्बन्धावच्छिन्नाभिधेयत्वत्वावच्छिन्न प्रतियोगिताकाभाव समनैयत्येनानियततया सिद्धसाधनस्य दुर्वारत्वात्; इति चेत्सत्यम्, स्वरूपसम्बन्धावच्छिन्नायां घटनिष्ठाभाव प्रतियोगितायां घटनिष्ठ नित्याभाव प्रतियोगितात्वेन हेतुना घटनिष्ठाभिधेयत्व भेदप्रतियोगिता दृष्टान्तेनाभिधेयत्वत्वावच्छिन्नत्वानुमाने तात्पर्येण समञ्जसत्वम्।

मूले (विशेषादर्शनदशायामिति) व्यभिचारिण्यप्येतद्दशाहेतौ व्यभिचाराग्रह दशायामित्यर्थः। "केवलान्वयिन्यपि सम्भव" इत्यनेनास्यान्वयः।

मन्वाभवस्य समवेतत्वादौ द्वितीयस्य घटाभावादौ व्यभिचार इत्यत आह ( विशेषादर्शनेति ) वस्तुतो घटो नाभिधेयः कम्बुग्रीवादिमत्त्वादित्यादि व्यतिरेकिणा सत्प्रतिपक्षः सम्भवत्येव, व्यापकाभावेनाप्रसिद्धस्यापि व्याप्याभावस्य सिद्ध्युपगमात् ।

---

व्यभिचारस्थलं दर्शयन्नेत स्कन्धनप्रयोजन माह दीधितौ (नन्विति) " आद्यस्य "- जात्यन्यत्व इत्यादिप्रथमानुमानहेतोः । " द्वितीयस्य " घटवृत्तीत्यादि द्वितीयानुमानहेतोः । प्रतियोगित्वादिप्रकारक बोधबुद्धेः विशिष्टबुद्धि विरोधिताया नव्यैरनभ्युपगमात् , तथासति तत्सम्बन्धादि प्रकारकबुद्धेरपि विरोधापातान्नोक्तानुमानेन घटोऽभिधेयः प्रमेयत्वादि त्यनुमानप्रतिरोध सम्भव इति स्वयमभिधेयत्वरूप प्रतियोगिप्रकारेणाभावानुमानमेव मूलकृता साध्याप्रसिद्ध्योपेक्षितमपि प्रतिरोधकतया व्यवस्थापयति ( वस्तुत इति ) साध्याप्रसिद्ध्या ऽन्वय्यनुमाना सम्भवात् , घटादिसाधारण द्रव्यत्वादेः पटादौ व्यभिचारग्रहसम्भवेन व्यतिरेकितयापि साधकताया स्तुघटत्वाभावेन पक्षान्तरवृत्ति कम्बुग्रीवादिहेतुतक व्यतिरेक्यादरः । अभावसाधक व्यतिरेकितायां साध्यप्रसिद्धे रनपेक्षां दर्शयति ( व्यापकाभावेनेति ) पटादाव भिधेयत्वादि व्यापकतया गृहीतस्य कम्बुग्रीवादिमत्त्वाभावस्याभावेन कम्बुग्रीवादिमत्त्वेनेत्यर्थः । " अप्रसिद्धस्यापि "- प्रतियोगितयाभिधेयत्वादिकं प्रकारीकृत्याज्ञातस्यापि । " व्याप्याभावस्य "- व्याप्यतया गृहीतमभिधेयत्वादिकं प्रतियोगितया प्रकारीकृत्य वस्तुभूतस्याभावान्तरस्यापि । "सिद्ध्युपगमात् " अप्रसिद्धसाध्यकानुमानस्य एकदेशिनामेवानुमततयाभ्युपगमोक्तिः । कम्बुग्रीवादिमत्त्वाभावस्य वास्तवाभिधेयत्व व्यापकत्वविरहादवस्तुभूताभिधेयत्वाभावस्यानुमित्या वगाहनासम्भवात् प्रसिद्धघटत्वाभावस्य व्याप्यतया गृहीताभिधेयत्व प्रतियोगिकत्वाभावात् व्यापकाभावेनेत्यादे र्यथाश्रुत स्यासङ्गति र्बोद्ध्या । व्यवहर्तव्य विशिष्टाप्रसिद्धावपि न विशिष्टार्थपर-

प्रत्येकपदार्थप्रसिद्ध्यैव तादृशप्रतिज्ञाद्युपपत्ते र्विशिष्टस्य वाक्यार्थत्वात् । सत्प्रतिपक्षस्तु साध्याभावव्याप्यवान् साध्यवदन्यत्वव्याप्यवांश्च पक्षः पक्षनिष्ठौ साध्याभावसाध्यवद्भेदव्याप्यौ- इत्येवमादिः प्रत्येकमेव । विभाजकन्तु प्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधित्वे सति प्रकृतपक्षसाध्यग्रहाविरोधि

---

प्रतिज्ञाद्यसम्भव इत्याह ( प्रत्येकपदार्थ प्रसिद्ध्यैवेति ) तावतैव भ्रमात्मकस्य व्यवहारोपयोगि विशिष्टज्ञानस्य सम्भवात्, विशिष्टज्ञानं विनापि तत्तद्विशेष्यांशे तत्तद्विशेषणावगाहित्वेन तात्पर्यघटकप्रतीतेर्ज्ञानेन विशिष्टबोधकवाक्यप्रयोगसम्भवाच्चेति भावः । मूलकृता सत्प्रतिपक्षदोषानभिधानात्स्वयमन्तं प्रदर्शयति ( सत्प्रतिपक्षस्त्विति ) सत्प्रतिपक्षहेतोः दोषस्त्वित्यर्थः । तुकारेण मूलनिरुक्तसत्प्रतिपक्षव्यवहारविषयतावच्छेदकरूपस्य दोषत्वव्यवच्छेदः । " व्याप्यवान् "- व्याप्यविशिष्टः । " पक्षनिष्ठौ "- आधेयतया पक्षविशिष्टौ । ( एवमादिरिति ) आदिपदादाधेयतासम्बन्धेन प्रकृतपक्षसाध्यक प्रकृतसाध्याभावादि पक्षकानुमिति जनकपरामर्श विषय प्रकृतपक्षव्याप्य विशिष्ट साध्याभावादि परिग्रहः, पक्षेसाध्याभाव इत्यादि बाधबुद्धेरपि पक्षे साध्यानुमिति विरोधितया तादृशबाधोन्नायकस्यापि परामर्शस्यानुमिति विरोधित्वेन तद्विषय विशिष्टस्यापि सत्प्रतिपक्षतौचित्यात् । अत एव साध्यतदभावयोराधेयतया तत्पक्षव्याप्यवत्ता ज्ञानसंवलनदशायां पक्षे साध्यं साध्याभावो वेति कोटिविशेष्यक संशयरूपा नानुमितिः । 'प्रत्येक' मेवेत्यनेन तावत्समुदायत्वस्य सत्प्रतिपक्षत्व दोषविभाजकत्वासंभवो दर्शितः । नन्वेवं प्रत्येकरूपस्यान्यासक्त्या विभाजकत्वासम्भवा त्सर्वसाधारणं किमेतद्दोषविभाजकमित्याकांक्षायां तादृशरूपमाह ( विभाजकन्त्विति ) सर्वत्र प्रकृतेति पक्षसाध्ययोर्द्वयोरेवान्वेति । प्रकृतपक्षतावच्छेदकावच्छिन्ने प्रकृतसाध्यतावच्छेदकाव-

च्छिन्न प्रकारकानुमितित्व व्यापकप्रतिबध्यता निरूपित प्रतिबन्धकतावच्छेदिका सती विशिष्टपक्ष विशिष्टसाध्यग्रहत्वव्यापक प्रतिबध्यतानिरूपित प्रतिबन्धकतावच्छेदक निरुक्तपक्षसाध्य वैशिष्ट्यग्रहप्रतिबन्धकतावच्छेदक विषयितावावच्छिन्नानुमिति जनकतावच्छेदिका यादृशविशिष्ट निरूपितविषयिता तादृशत्व मित्यर्थः । तादृशी च वह्न्यभावव्याप्यविशिष्ट ह्रदादि निरूपित विषयितेति तत्र लक्षणसमन्वयः । साध्याभाव व्याप्यविशिष्ट पक्षविषयितायां रसाध्यानुमितिप्रतिबन्धकतावच्छेदकतया तद्वदनुमिति जनकतावच्छेदक विषयिताके साध्याभावव्याप्यव्याप्य वत्पक्षादा वतिव्याप्तिवारकतया सत्यन्तं सार्थकयिष्यते । तत्र निरुक्तवैशिष्ट्यग्रह प्रतिबन्धकतावच्छेदकविषयिताकत्वरूप विरोधित्वान्तार्थस्योन्नायकविषयविशेषणत्वे विषयिताभागस्य द्विधा निवेशेन गौरवादुन्नायकताघटकविषयितायामेव प्रतिबन्धकतावच्छेदकत्व विशेषणं दत्तम् । पक्षतावच्छेदक वैशिष्ट्यनिवेशव्यावृत्तिः पूर्ववत् । उक्तप्रकारताशालि ग्रहनिरूपितप्रतिबन्धकता मात्रनिवेशे साध्याभावव्याप्य व्याप्य वत्ताज्ञानस्यापि समूहालम्बन साध्यवत्ता ग्रहरूप साध्याभावव्याप्यव्याप्याभावादिज्ञानरूप विरोधिग्रह प्रतिबन्धकतया नोपदर्शित सत्प्रतिपक्षोन्नायक व्यावृत्तिरिति तादृशप्रकारताकानुमितित्व व्यापकप्रतिबध्यता निरूपित प्रतिबन्धकता निवेशः । तादृशप्रकारताशालि दोषविशेषजन्यज्ञान माहार्यज्ञानञ्च प्रति साध्याभावव्याप्यवत्ताज्ञानस्याऽप्रतिबन्धकतया सत्प्रतिपक्षस्यैवाऽसंग्रह इति ज्ञानत्वमुपेक्ष्यानुमितित्वनिवेशः । ह्रदः काञ्चनमयवह्निमान्काञ्चनमयह्रदो वह्निमानित्यादौ संग्राह्यस्य वह्न्यभावव्याप्य विशिष्टह्रदादे ज्ञानस्य प्रतिबध्यतावच्छेदककोटौ साध्यतावच्छेदकादिघटक काञ्चनमयत्वादिविषयिताया अनिवेशात्तद्घटित पक्षतावच्छेदकादिविशिष्टे साध्यतावच्छेदकादि विशिष्टवैशिष्ट्यग्रहत्वं नोक्तज्ञानप्रतिबध्यतावच्छेदक मित्यव्याप्ति स्स्यादिति स्वरूपसम्बन्धरूप मवच्छिन्नत्वं परित्यज्य व्यापकत्वं

प्रतिबध्यताविशेषणम् । अतएवोक्तस्थले आश्रयासिद्ध्या द्युन्नायके विशिष्ट-पक्षग्रहत्वादि मात्रावच्छिन्नविरोधिन्यपि विशिष्ट पक्षसाध्यवैशिष्ट्यविषयकानुमितित्व व्यापकप्रतिबध्यता घटित विरोधिताशालिनि काञ्चनमयत्वाभाव व्याप्यविशिष्ट ह्रदादौ सत्यन्तदळस्य निरुक्तपक्षसाध्य वैशिष्ट्यग्रह प्रतिबन्धकतावदनुमितिजनकतावच्छेदक विषयिताकत्वरूपताहश विरोध्युन्नायकत्व-स्यच सत्त्वेनातिव्याप्तिस्स्या दित्युन्नेये अविरोध्यन्तं विशे ग्ग्म् । एतच्च "संगृह्यत" इत्यादिना स्वयमेव वक्ष्यते । उन्नेयतया प्रविष्टविशिष्टविषये अविरोधित्व विशेषणं यथाश्रुत शब्दलभ्यम्, तदर्थः तादृशप्रतिबन्धकतावच्छेदकविषयिताकान्यत्वम् । तन्निवेशे अधिकविषयितानिवेशा द्गौरवम्, काञ्चनमय ह्रदो वह्निमानित्यादौ काञ्चनमयत्वाभावव ह्रद दिरूपाश्रयासिद्ध्या दे भेदस्य सत्प्रतिपक्षोन्नेय वह्न्यभाव विशिष्ट ह्रदादिरूपबाधे असत्त्वेनाव्याप्तिश्चेत्युन्नायकताघटक बाधविषयितायां विशिष्टपक्षादिग्रह प्रतिबन्धकतानवच्छेदकत्व निवेशः । उक्तस्थले बाधग्रहस्याप्यनुमिति रूपविशिष्ट पक्षादिग्रह विरोधितयाऽव्याप्तितदवस्थ्यमिति विशिष्ट पक्षग्रहत्व व्यापकत्वनिवेशः । विशिष्टपक्षग्रहत्व पर्याप्तयवच्छेदकताकत्वस्य प्रतिबध्यतायां निवेशे काञ्चनमय रजतमय ह्रदो वह्निमानित्यादा वाश्रयासिद्ध्युन्नायके काञ्चनमयत्वाभाव व्याप्यवद्ह्रद दावतिव्याप्तिः, रजतमयत्वघटित पक्षतावच्छेदक विशिष्टविषयक ग्रहत्वस्य तत्प्रतिबध्यतानवच्छेदकत्वात्, अतस्तदुपेक्ष्य तादृशग्रहत्वव्यापकताया स्तत्र निवेशः । अतएव ह्रदो वह्निमानित्यादौ ह्रदत्वादि पक्षतावच्छेदकविशिष्ट विषयकग्रहत्वस्य केवलस्य कस्यापि प्रतिबद्ध्यतानवच्छेदकत्वेपि नाप्रसिद्धिः । नच तादृशग्रहत्वव्यापक प्रतिबध्यतानिवेशेपि कस्या अपि विरोधिज्ञान प्रतिबध्यताया: ह्रद इत्यादि निर्धर्मितावच्छेदकक ज्ञानसाधारण तादृश ग्रहत्व व्यापकत्वासम्भवा तथाविधप्रतिबध्यता

प्रसिद्धिः, विशिष्टविषयकानुमितित्व व्यापकता निवेशे तादृशानुमितित्वस्य निर्धर्मितावच्छेदकक ज्ञानाव्यावृत्तत्वेपि ह्रदो वह्निमान् ह्रदो घटवानित्यादि नानाधर्मप्रकारकानुमितिष्वेव ह्रदत्वादिविशिष्ट विषयकानुमितित्व सत्त्वा त्तादृशसकलानुमितीनां कस्यचिदपि ज्ञानस्य प्रतिबध्यत्वासम्भवेन तादृशानुमितित्व व्यापकप्रतिबध्यता न प्रसिद्ध्यतीति वाच्यम् ; कामिनीजिज्ञासादि प्रतिबध्यताया एव तथाविधानुमितित्वव्यापिकायाः प्रसिद्धेः ।

वस्तुतस्तु-विरोधिताघटक प्रतिबध्यतायामेव -पक्षतावच्छेदकादि विशिष्टविषयकानुमितित्वाव्यापकतानिवेशान्नाऽप्रसिद्धिरिति पूर्वमेवावेदितम् । एतेन कामिनीत्वस्य यत्र पक्षतावच्छेदकता तत्र तद्विशिष्टविषयकानुमिति त्वादेः कामिनीजिज्ञासाप्रतिबद्धयत्वाव्याप्यत्वेपि नक्षतिः ।

अथ—उन्नेये विशिष्टपक्षादि ग्रहाविरोधित्व निवेशेपि वह्न्यभाव व्याप्यव्याप्याभाववद्ध्रदो वह्निमानित्यत्र वह्न्यभाव व्याप्यव्याप्यविशिष्टह्रदे आश्रयासिद्ध्यात्मकेतिव्याप्तिर्दुर्वारैव, तस्य वह्न्यभाव व्याप्यविशिष्टह्रदात्मक सत्प्रतिपक्षस्य विशिष्टपक्षग्रहाविरोधिन उन्नायकत्वात्; आश्रयासिद्धि त्वेनानुमिति विरोधितया सत्यन्तदळाक्रान्तत्वाच्च ।

नचोन्नायक एवाविरोध्यन्तविशेषणं विवक्षितम्, उक्ताश्रयासिद्धेश्च विशिष्टपक्षग्रहविरोधितया नातिव्याप्तिरितिवाच्यम् । तथासति वह्नि मान् ह्रदो वह्न्यभावव्याप्यव्याप्याभाववानित्यत्र वह्न्यभाव व्याप्यव्याप्यविशिष्ट ह्रदात्मकबाधे अनुमिति विरोधिवह्न्यभाव व्याप्यविशिष्टह्रदरूपाश्रया सिद्ध्युन्नायकेतिव्याप्तिः; तस्य वह्निविशिष्टह्रदात्मक विशिष्टपक्षग्रहाविरोधि त्वादिति चेन्न;- उन्नेये उन्नायकेचा विरोध्यन्तस्य विशेषणतोपगमेमातिप्रसङ्गस्य वारणीयत्वात् । अथवा- उन्नेय विशेषणमेवाऽविरोध्यन्तम्, यद्धर्मावच्छिन्नप्रतिबध्यता घटितं विरोधित्वं सत्यन्तार्थः तद्धर्मावच्छिन्नप्रति-

5

प्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधिरूपेणोन्नायकत्वम् । तदुन्नायकत्वञ्च आह यादृशविशिष्टविषयकत्वेन परामर्शस्यानुमितिजनकत्वं तत्त्वम् । तच्च साध्याभाव

---

वत्पक्षतावच्छेदकविशेषिताया उन्नेयविशेषणतया विवक्षितत्वात्पूर्वोक्तस्थले च वह्न्यभावव्याप्यव्याप्यविशिष्ट ह्रदात्मकाश्रयासिद्धे विशिष्टपक्ष ग्रहत्वावच्छिन्नविरोधित्वेन सत्यन्तदलाक्रान्ताया स्तद्रूपावच्छिन्नाविरोधिन स्सत्प्रतिपक्षस्यैवोन्नायकत्वेन नातिव्याप्तिः । उन्नेयबाधस्य उन्नायकसत्प्रतिपक्षस्य च विशिष्टपक्षसाध्यवैशिष्ट्य ग्रहत्वरूपैकधर्मावच्छिन्न प्रतिबध्यतानिरूपित प्रतिबन्धकतावच्छेदक विषयिताकत्वेन सत्प्रतिपक्षे लक्षणसमन्वय इति । उन्नेये विरोध्यन्तं विशेषणं वह्निव्याप्याभावादिमान्पर्वतो वह्निव्याप्यवत्पक्षात्मकबाधस्य विशिष्टपक्षादिग्रहाविरोधिवह्निमत्पक्षोन्नायकस्य वारकमिति वक्ष्यते । तत्र यथाश्रुतं विरोध्युन्नायकत्वं प्रतिबन्धकतावच्छेदकविषयिताक विशिष्टविषयिताकानुमिति प्रयोजकत्वम्, तत्र प्रतिबन्धकतावच्छेदक विषयितायाः स्वनिरूपक विषयनिरूपित विषयत्वेन निवेशनं शिरोवेष्टनेन नासिकास्पर्शनमनुकरोतीति प्रतिबन्धकतावच्छेदक विषयित्वावच्छिन्नानुमिति प्रयोजकत्वं निवेशितम् । उक्तस्थले वह्निव्याप्यवत्पर्वतरूपबाधस्य वह्निमत्पर्वतविषयक समूहालम्बनरूप वह्निव्याप्यवत्पर्वतरूप विरोधिविषयकानुमिति प्रयोजकतयातिप्रसङ्गस्यादिति विरोधिविषयित्वावच्छिन्ननिरूपित प्रयोजकत्वं निवेशितम् ।

अनुमितिजनकत्वरूपोन्नायकत्वं न विषयस्येति अनुमितिजनकतावच्छेदक विषयिताकत्वरूपमनुमिति प्रयोजकत्वमेवात्र तदित्याह ( तदुन्नायकत्वञ्चेति ) ( यादृशविशिष्टविषयकत्वेनेति ) तृतीयार्थोऽनतिरिक्तवृत्तित्वरूपमवच्छेदकत्वम्, तन्निवेशाद्वह्निव्याप्यवत्पर्वतरूपोक्तस्थलीयबाध सत्प्रतिपक्ष विषयक समूहालम्बनविषये नातिप्रसङ्गः । स्वरूपसम्बन्धरूपावच्छेदकत्व निवेशाभावेन सत्प्रतिपक्षैकदेशे केवलपक्षादौ च नातिप्रसङ्गः (तच्चेति) साध्या

व्याप्यवत्पक्षादिकम् । असाधारणविरोधयोरन्यतरस्य सत्प्रतिपक्षविषया दोषत्वपक्षे प्रकृतसाधने प्रकृतसाध्यव्यापकाभावप्रतियोगित्वाद्यनवगाहि परामर्शो ग्राह्यः । अत्रच सत्यन्तेन सत्प्रतिपक्षोन्नायकस्य, अविरोध्यन्तेनाश्रया-

---

विशिष्टं चेत्यर्थः । साध्यव्यापकाभावप्रतियोगि प्रकृतहेतुमत्पक्षादौ मतभेदेन विरोधासाधारणरूपेऽतिव्याप्तिं वारयति ( असाधारणेति ) ( सत्प्रतिपक्षविषयेति ) अनुमितिप्रतिबन्धकसाध्याभाव व्याप्यवत्ताज्ञानविषय विषयेत्यर्थः । सपक्षविपक्षव्यावृत्तत्व मसाधारण्यम्, साध्यासामानाधिकरण्यं विरोध इति मतेऽनुमित्यविरोधिनि तत्र मोक्तलक्षणातिव्याप्तिरित्यतः "पक्ष" इत्युक्तम् । " प्रतियोगित्वादी " त्यादिना पक्षधर्मतापरिग्रहः । तथाच प्रकृतपक्षतावच्छेदकावच्छिन्ने प्रकृतसाध्यतावच्छेदक विशिष्टव्यापकाभाव प्रतियोगित्व विशिष्ट प्रकृतसाधनतावच्छेदकावच्छिन्न वैशिष्ट्यानवगाहिपरामर्शनिष्ठानुमिति जनकतावच्छेदक विषयिताकत्वरूपमुन्नायकत्वं विवक्षणीयमित्यर्थः । रूपान्तरेण यत्र प्रकृतहेतो र्व्यतिरेकिप्रतिहेतुता तत्स्थलीयप्रतिपक्षसंग्रहाय प्रकृतसाधनतावच्छेदक निवेशः । रूपान्तरावच्छिन्न प्रकृतसाध्यव्यापकीभूताभावप्रतियोगित्व विशिष्टप्रकृतहेतुमत्पक्षकालीनत्वस्य यत्र प्रकृतसाध्यतावच्छेदक घटकत्वं तत्स्थलीयतादृशसाध्यतावच्छेदक विशिष्टसाध्याभाव व्याप्यवत्पक्षात्मक प्रतिपक्षसंग्रहाय प्रकृतसाध्यतावच्छेदकनिवेशः । यत्र प्रकृतसाध्यव्यापकाभावप्रतियोगित्व विशिष्टप्रकृतसाधनवत्त्वेन रूपान्तरावच्छिन्नपक्षस्य प्रकृतपक्षतावच्छेदके प्रवेश स्तत्र सत्प्रतिपक्षस्य तादृशपक्षतावच्छेदकविशिष्टे साध्याभावव्याप्यवत्तारूपस्य संग्रहाय प्रकृतपक्षतावच्छेदकनिवेशः । साध्याभावनिरूपितान्वयव्याप्तिविशिष्टप्रकृत हेतुमत्पक्षस्यापि लक्ष्यतापगमान्न तत्रातिव्याप्तिः । तस्यासाधारण्यमात्रात्मकत्वे तदनवगाहित्वमपि परामर्शविशेषणन्देयम् । तत्सङ्ग्राहकमपि आदिपदम् । ( सत्प्रतिपक्षोन्नायकस्येति ) साध्याभावव्याप्य व्याप्यवत्पक्षादे रन्नि-

तन्त्रम, विरोधस्यैव दूषकत्वेऽधिकस्य व्यर्थत्वात्।

॥ इति तत्त्वचिन्तामणौ सत्प्रतिपक्षग्रन्थः ॥

सिद्ध्याद्युन्नायकस्य, विरोध्यन्तेन वह्निव्याप्याभावे साध्ये वह्निव्याप्यवत्पक्षात्मकस्य बाधस्य व्युदासः। सङ्गृह्यते चानेन काञ्चनमयवह्निमानित्यादौ वह्न्याद्यभावव्याप्य ह्रदत्वादिमान् पक्ष इति। सत्प्रतिपक्षेच यथासिद्धान्तं पञ्चावयवादि प्रयोगमिच्छन्ति। अयं हेतुस्साध्यव्यभिचारवानित्यादिवदयं पक्षस्साध्याभावव्याप्यवानित्यादिकमुद्भावनं पुनरुचितं प्रतिभाति।

॥ इति दीधितौ सत्प्रतिपक्षग्रन्थः ॥

रोधितयानाभासरूपस्येत्यर्थः (आश्रयासिद्ध्याद्युन्नायकस्येति) आश्रयासिद्ध्यन्तर्गतस्य पक्षविशेषणाद्यभाव व्याप्यवत्पक्षादेरित्यर्थः। आश्रयासिद्ध्यादीत्यादिपदात्साध्याप्रसिद्ध्यादिपरिग्रहः। वह्न्यादिसाध्यकबाधस्य किञ्चिदनुन्नायकतया उन्नेये विरोध्यन्तविशेषणस्य तद्वारकता न सम्भवतीति बाधविशेषे तद्व्यावृत्तिं दर्शयति (विरोध्यन्तेनेति). वह्निव्याप्यवत्पक्षात्मकस्येत्यनेन वह्निमत्पक्षोन्नायकत्वं सूचितम्। अविरोध्यन्त सार्थक्याय प्रतिबध्यतायां स्वरूपसम्बन्धरूप पक्षसाध्यवैशिष्ट्यावगाहित्वावच्छिन्नत्वनिवेशासम्भवं दर्शयति (सङ्गृह्यत इति) "अनेन"—लक्षणेन। प्रतिपक्षस्थापनात्मक न्यायप्रयोगानौचित्यं दर्शयिष्यं स्तस्यैव साम्प्रदायिकतामाह (सत्प्रतिपक्षेचेति) (यथासिद्धान्तमिति) नैयायिकादि प्रतिवादिनामित्यादिः। स्वस्वसिद्धान्तानुसारेणेत्यर्थः। (पञ्चावयवादीति) ह्रदो न वह्निमान् ह्रदत्वादित्यादिरूपेत्यर्थः। आदिना मीमांसक सौगतसिद्धत्र्यवयवद्व्यवयवन्याय परिग्रहः (इच्छन्तीति) साम्प्रदायिका इति शेषः (उचितं प्रतिभातीति) वादिना न्याये प्रयुक्ते हेतुदोषमात्रस्यैवाकांक्षितत्वा त्प्रथमतस्तदनुद्भाव्य विपरीतप्रतिज्ञादिप्रयोगे ऽर्थान्तरस्य दुर्वारत्वादिति भावः।

इति श्री महामहोपाध्याय गदाधरभट्टाचार्य विरचितः

॥ सत्प्रतिपक्षग्रन्थः ॥

श्रीरस्तु ।

श्रीहयग्रीवाय नमः ।

# ॥ शास्त्रमुक्तावली ॥

तत्त्वचिन्तामणौ

# सामान्यनिरुक्तिः ।

## अथ हेत्वाभासास्तत्त्वनिर्णयविजयप्रयोजकत्वान्निरूप्यन्ते ।

[ दीधितिः । ]

एतावता प्रबन्धेन सपरिकरं हेतुं निरूप्य तत्प्रसङ्गात् तत्त्वनिर्णयादिरूपतत्कार्यकारित्वाच्च तदाभासनिरूपणं प्रतिजानीते-अथेति ।

गदाधरीयम् ।

हेत्वाभासनिरूपणे प्रसंगस्यापि संगतित्वं सम्भवति, व्याप्तिपक्षधर्मताविशिष्टहेतुनिरूपणे सति व्याप्तिपक्षधर्मताविरोधितद्विरहवतो दुष्टहेतोः स्मरणात्, अतस्तत्प्रदर्शनेन मूलस्य न्यूनतां परिजिहीर्षुः प्रसङ्गस्यापि तन्निरूपणप्रयोजकत्वमाह--एतावते ति । परिकरः—व्याप्ति-

पक्षधर्मते । "निरूप्ये" त्यन्तमुक्तक्रमेण दुष्टहेतोः स्मृतत्वस्य प्रसङ्गनिर्वाहकस्य लाभाय । तत्प्रसंगा दिति । सपरिकरहेतुनिरूपितप्रसङ्गसङ्गतेरित्यर्थः । तज्ज्ञानजन्यजिज्ञासाधीनत्वं पञ्चम्यर्थः, अन्वयश्चास्य निरूपण मित्यनेन ।

यद्यपि तत्त्वनिर्णयविजयप्रयोजकत्वा दिति मूलम् हेत्वाभासनिष्ठतत्त्वनिर्णयादिजनकज्ञानविषयत्वार्थकतया शिष्यप्रवृत्त्युपयोगिनिरूपणघटकज्ञानप्रयोजनप्रदर्शनपरम्, तथापि तन्मात्रपरत्वे संगत्यप्रदर्शनेन मूलस्य न्यूनता स्यादिति तस्यैककार्यकारित्वरूपसंगतिप्रदर्शनपरत्वमपि सम्भवतीति स्फुटीकर्तुमाह—तत्त्वनिर्णयादी ति । आदिपदाद्विजयपरिग्रहः । तत्कार्यकारित्वात्—सपरिकरहेतुप्रयोज्यकार्यप्रयोजकत्वात् । प्रयोजकत्वं च-जनकतावच्छेदकादिसाधारणम्, अतः स्वविषयकज्ञानकार्यं प्रति स्वस्य तथात्वमक्षतमेव । तत्त्वनिर्णयः—प्रमितेकोटिनिश्चयः, तत्र व्याप्तिपक्षधर्मताविशिष्टप्रकृतहेतुज्ञानमिव तद्विपरीतकोटिसाधकस्य हेत्वाभासत्वज्ञानमप्युपयुज्यते, प्रतिबन्धकीभूतविपरीतकोटिव्याप्यवत्ताज्ञानेऽप्रामाण्यग्राहकत्वादित्युभयोस्तत्त्वनिर्णयप्रयोजकत्वम् ।

अथ वा, तत्त्वनिर्णयः—साध्यवत्ताज्ञाने प्रमात्वनिश्चयः, तत्रानुमापकहेतोः व्याप्त्यादिविशिष्टत्वरूपसद्धेतुत्वज्ञानमिव तद्विपरीतकोटिसाधकहेतोर्दुष्टत्वज्ञानमप्युपयुज्यते । प्रकृतसाध्यग्रहाप्रामाण्यग्राहकविपरीतकोटिसाधकहेत्वदुष्टत्वग्रहविघटकत्वात् । विजयप्रयोजकत्वं च हेत्वाभासस्य स्वज्ञानाधीनपरोक्तहेतुदोषोद्भावनद्वारा, व्याप्त्यादिविशिष्टहेतोश्च स्वज्ञानाधीनसन्न्यायप्रयोगद्वारा बोध्यम् ।

मूलोक्तलक्षणानां दुष्टहेतुलक्षणत्वे दोषेष्वतिव्याप्तिः । यथार्थज्ञाननिष्ठानुमितिप्रतिबन्धकतावच्छेदकविषयताश्रयत्वपर्यन्तस्य समूहाल-

# तत्रानुमितिकारणीभूताभावप्रतियोगिय-

[दी] अनुमिती ति। यथांश्रुतमिदं हेतुदोषाणां लक्षणम् ; तद्वत्त्वञ्च दुष्टहेतूनाम् । तदभिप्रायेणैव उपधेयसंकरेऽपी

ष्वनज्ञानविषयताश्रयोदासीनपदार्थवारणाय प्रथमलक्षणे विवक्षणीयतया बाधादिज्ञानप्रतिबन्धकतायां प्रायशो हेतुविषयताया अनवच्छेदकत्वात् तत्रत्यहेतावव्याप्तिश्च । यद्विषयकत्वेने त्यादिलक्षणे च तृतीयाया अवच्छेदकत्वार्थकतया सुतरां तथेत्यत आह—यथाश्रुत मिति । इदम्—एतत् लक्षणत्रयम् ।

ननु 'हेतुवदाभासन्त' इति व्युत्पत्त्या हेत्वाभासपदस्य दुष्टहेतुपरत्वात् दुष्टहेतुनिरूपणस्यैव प्रतिज्ञातत्वात्तल्लक्षणमेवाकाङ्क्षितम्, अतस्तदनुक्तौ मूलस्य न्यूनता । अन्यविधव्युत्पत्त्या हेत्वाभासपदस्य हेतुदोषपरत्वसम्भवेऽपि ते चे त्यादिना दुष्टहेतूनामेव विभजनात् दुष्टहेतुनिरूपणस्य अप्रतिज्ञातत्वे तदसङ्गतिः । एवं दुष्टहेतुनिरूपणस्य प्रकृतत्वे दुष्टहेतूनां विभागानर्हतया तेषां संकरेण विभागव्याघातशंकाया अनवतारात् । उपधेयसंकरेऽपि इत्यादिग्रन्थस्य उपाध्यसंकरेण विभागोपपादनपरस्यासंगति रित्यत आह-तद्वत्त्वञ्चे ति । तादृशदोषवत्त्वञ्चेत्यर्थः । दुष्टहेतूनां लक्षण मित्यनुषज्यते । स्फुटमिति शेषः । तथाच दुष्टहेतुनिरूपणस्य प्रकृतत्वेऽपि दोषलक्षणे कृते दुष्टहेतुलक्षणस्य स्फुटतया लाभेन नोक्तानुपपत्तिरिति भावः ।

तदभिप्रायेणैवेति । दुष्टहेतुलक्षणाभिप्रायेणैवेत्यर्थः । अनुमितिपदस्यानुमितिसामान्यपरत्वे (अन्यथा न् यत्किञ्चिदनुमितिपरत्वे) ऽतिप्रसंगात् प्रकृतपक्षसाध्यहेतुकानुमितिपरत्वमावश्यकम् ; तथाच व्यभि-

थार्थज्ञानविषयत्वं, यद्विषयकत्वेन लिंगज्ञान-स्यानुमितिप्रतिबन्धकत्वं, ज्ञायमानं सदनुमि-तिप्रतिबन्धकं यत् तत्त्वं वा हेत्वाभासत्वम् ।

---

[दी] त्यादि वक्ष्यति । तत्रानुमितिपदं अनुमितिनिष्ठकार्यतानिरूपक सम्बन्धित्वेनानुमिति—तत्करणज्ञानान्यतरपरम् ; साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारकानुमिति परं वा ।

---

चारादावव्याप्तिः, 'वह्निर्धूमव्यभिचारी' इत्यादि ज्ञानाभावस्य 'पर्वतो धूमवा' नित्याद्यनुमित्यजनकत्वात् । लक्षणया तस्य तादृशानुमितिकारण-ज्ञानमात्रपरत्वे च बाधादावव्याप्तिः, बाधादिज्ञानस्य परामर्शप्रति-बन्धकत्वात् ; अतोऽनुमितिपदमजहत्स्वार्थलक्षणया तदुभयपरतया व्याचष्टे-तत्रेति । तादृशलक्षणवाक्य इत्यर्थः ।

लक्षणघटकतावच्छेदकमुभयसाधारणमनुगतरूपमाह—अनुमिति-निष्ठकार्यतेति । अनुमितिपदस्य प्रकृतपक्षतावच्छेदकविशिष्टे प्रकृत-साध्यतावच्छेदकावच्छिन्नप्रकारकप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकानुमि-तिपरत्वं स्वयमेव दर्शयिष्यति । अतो न वक्ष्यमाणातिप्रसंगः । निरूपकत्वञ्चात्र यदि प्रतियोगित्वं तदा कार्यस्य कार्यताप्रतियोगित्वा-भावादनुमित्यसंग्रहः । अतः सम्बन्धिपदं सम्बन्धिद्वयसाधारणस्य त-त्साक्षात्कारजनकसाक्षात्कारविषयतात्मकनिरूपकत्वस्य लाभाय । अत्र 'पर्वतो वह्निमान्, ह्रदश्च तथा' इत्यादिसमूहालम्बनानुमित्यादि-विरोधिह्रदनिष्ठवह्न्यभावादिरूपबाधादेः पर्वतादौ धूमादिना वह्न्यादि-साधने दोषताप्रसंगः, प्रकृतानुमितिनिष्ठकार्यतानिरूपक सम्बन्धिग्रहत्वस्य कस्यापि प्रतिबध्यतानवच्छेदकतया तदवच्छिन्नप्रतिबन्धकतानिरूपितप्रति-

बन्धकतानिवेशासम्भवात् । तथाविधग्रहत्वव्यापकप्रतिबध्यतानिवेशे चानुमित्याविरोधिनि व्यभिचारादौ परामर्शाविरोधिनि बाधादौ चाव्याप्तिः । उभयविरोधिपक्षाप्रसिद्ध्यादावेव तादृशप्रतिबध्यतानिरूपकज्ञानविषयत्वसत्त्वात् ; अतः कल्पान्तरमाह साध्यव्याप्येति । प्रकृतपक्षतावच्छेदकविशिष्टे प्रकृतसाध्यतावच्छेदकावच्छिन्न तद्व्याप्तिविशिष्ट प्रकृत हेतुतावच्छेदकावच्छिन्नप्रकारकानुमितिसामान्यपरमित्यर्थः । एवञ्च तादृशसमूहालम्बनानुमितेर्व्याप्त्यादिविषयकतया व्यभिचारादिज्ञानप्रतिबध्यत्वाच्च व्यभिचाराद्यसंग्रहः ।

दर्शितसमूहालम्बनानुमितिप्रतिबन्धकतामादायातिप्रसङ्गस्य वारणाय सामान्यपदम् , तथाच तादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशाल्ययथार्थज्ञानविषयत्वं पर्यवसितार्थः । अत्र च साध्यतावच्छेदकावच्छिन्नप्रकारकानुमितिसामान्यान्तर्गतायां 'पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्च' इत्याद्यनुमितौ 'ह्रदो न वह्निमा' नित्यादिनिश्चयस्याप्रतिबन्धकत्वात् नातिप्रसंगः । बाधसत्प्रतिपक्षस्वरूपासिद्ध्याश्रयासिद्धिषु अव्याप्तिवारणाय प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वनिवेशः । द्रव्यत्वादिना ह्रदादिविशेष्यकानुमितौ तथाविधबाधनिश्चयस्याप्रतिबन्धकत्वात् तद्दोषतादवस्थ्यम् , अतः पक्षतावच्छेदकावच्छिन्नत्वोपादानम् । अवच्छेदकत्वञ्च तत्पर्याप्त्यधिकरणत्वम् , तेन 'अतेजस्वी पर्वतो वह्निमा' नित्यादौ विशिष्टपर्वतत्वादिमति वह्न्याद्यभावरूपबाधस्य 'काञ्चनमयः पर्वतो वह्निमा' नित्यादौ चाश्रयासिद्धेः, शुद्धपर्वतत्वाद्यवच्छिन्नपक्षकानुमित्यविरोधित्वेऽपि नासंग्रहः, एवमग्रेऽपि बोध्यम् ।

साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारकत्वानिवेशे परामर्शाविरोधितया बाधसत्प्रतिपक्षयोरव्याप्तिः । तत्र प्रकृतसाध्यतावच्छेदकावच्छिन्नत्वस्यानुपादानेऽपि तद्दोषतादवस्थ्यम् ; वह्नित्वावच्छिन्नाभावादिनिश्चयस्य

'धूमजनकतेजस्वी वह्निव्याप्यधूमवांश्च ह्रद' इत्याद्यनुमित्यप्रतिबन्धकत्वात् ।

यत्तु साध्याप्रसिद्धव्याप्तिवारणप्रयोजनकत्वं तदुपादानस्य इति—तत्तु न सत्; 'वह्निर्न काञ्चनमय' इत्यादिनिर्णयस्य पक्षे शुद्धवह्नित्वादिना वह्न्याद्यनुमित्यविरोधित्वेऽपि द्वितीयदले प्रकृतसाध्यतावच्छेदकावच्छिन्नान्तर्भावसत्त्वात्तस्य काञ्चनमयवह्निव्याप्यधूमवान् पर्वत इत्याद्यनुमितिविरोधितया तत्र लक्षणसमन्वयात् । द्वितीयदलप्रवेशाद्व्यभिचारविरोधसाधनाप्रसिद्धिस्वरूपासिद्धिषु नाव्याप्तिः । तत्रापि साध्यतावच्छेदकावच्छिन्ननिरूपितव्याप्तिविशिष्टत्वनिवेशाद्व्यभिचारविरोधयोर्नाव्याप्तिः । वह्निर्धूमव्यभिचारीत्यादि ज्ञानदशायामपि द्रव्यत्वादिना धूमादिनिरूपितव्याप्तेर्भानसम्भवात् तद्दोषतादवस्थ्यम्; अतो व्याप्तौ साध्यतावच्छेदकावच्छिन्नीयत्वनिवेशः । अन्वयव्याप्तिव्यतिरेकव्याप्ती विशिष्योपादाय तदुभयाविशिष्टहेतुप्रकारकत्वमेव निवेश्यम् । एकतरमात्रोपादाने साधारण्यानुपसंहारित्वयोरेकतरासंग्रहप्रसंगात् इत्यग्रे व्यक्तीभविष्यति । तादृशव्याप्तिद्वयप्रकारतानिरूपितहेतुप्रकारतायास्तत्साध्यकतद्धेतुकानुमितिजनकतावच्छेदकप्रकारतात्वेनानुगमय्य निवेशनञ्च न सम्भवति, साध्याभाववद्वृत्तित्वज्ञानदशायां केवलव्यतिरेकव्याप्त्यादिप्रकारकहेतुमत्त्वज्ञानोत्पत्त्या साधारण्यादेस्तादृशप्रकारताशाल्यनुमितिसामान्यविरोधित्वाभावात् ।

व्याप्तिविशिष्टविषयित्वमात्रस्य तद्विशिष्टहेतुतावच्छेदकावच्छिन्नविषयित्वमात्रस्य या निवेशे स्वरूपासिद्धावव्याप्तिः, अतः पक्षांशे तादृशव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नप्रकारकत्वनिवेशः । पक्षांशे व्याप्तिविशिष्टप्रकारकत्वमात्रनिवेशेऽपि तद्दोषतादवस्थ्यम् । 'धूमाभाववान् ह्रद' इत्यादिज्ञानस्य द्रव्यत्वादिना हेतुमत्ताज्ञानाविरोधि-

स्त्वात् । साधारण्याद्यव्याप्तिश्च वह्नित्वाद्यवच्छिन्ने धूमाभाववद्वृत्तित्वादिग्रहस्य धूमादिव्याप्तिविशिष्टतद्व्यक्तित्वावच्छिन्नप्रकारकज्ञानाविरोधित्वात् । अतो हेतुतावच्छेदकावच्छिन्नत्वनिवेशः । पक्षांशे साध्यादिप्रकारकस्य संस्कारादेराहार्यज्ञानादेश्च बाधादिज्ञानाप्रतिबध्यत्वादसम्भव इत्यतस्तादृशानुमितित्वव्यापकतानिवेशः । साध्यव्याप्यहेतुधर्मितावच्छेदककसाध्यवत्त्वज्ञानस्यैव 'साध्यव्याप्यहेतुमान् पक्षः साध्यवा' नित्याकारकतया तादृशाकारोल्लिखनस्वरसात्तादृशहेतुविशिष्ट–पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकावच्छिन्न प्रकारकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वस्य लक्षणघटकत्वोपगमे पर्वतत्वाद्यवच्छेदेन वह्न्यादेः साध्यत्वे तत्सामानाधिकरण्येन साध्याभावादेरदोषत्वप्रसंगः, सामानाधिकरण्यमात्रावगाहिबाधादिज्ञानस्य शुद्धपर्वतत्वाद्यवच्छेदेन वह्न्यादिज्ञानं प्रत्येव प्रतिबन्धकतया धूमादिविशिष्टपर्वतत्वाद्यवच्छिन्नधर्मिकवह्न्यादिज्ञानाप्रतिबन्धकत्वादिति तदुपेक्षितम् ।

न च विशेष्यतावच्छेदककोटौ धूमादेरधिकस्य भानेऽपि शुद्धपर्वतत्वावच्छिन्नसंयोगादेर्यत्र संसर्गता तत्र पर्वतत्वसामानाधिकरण्येन वह्न्यभावादिज्ञानस्य प्रतिबन्धकत्वमावश्यकम्, तादृशानुमितेरपि शुद्धपर्वतत्वावच्छेदेन वह्न्याद्यवगाहित्वादिति वाच्यम्; धर्मितावच्छेदकावच्छेदेन विशिष्टबुद्धौ धर्मितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नत्वमेव संसर्गांशे भासते न तु तदेकदेशावच्छिन्नत्वमपि, तद्धर्मावच्छिन्नविशेष्यतानिरूपित तदेकदेशव्यापकत्वावच्छिन्नसंसर्गताया अप्रामाणिकत्वात् ।

अथ लिंगोपधानमते हेतोः सर्वत्रैव धर्मितावच्छेदकतया भानात्तादृशसंसर्गताभ्युपगम आवश्यकः अन्यथा शुद्धपर्वतत्वाद्यवच्छेदेन हेतुमत्त्वज्ञानस्थलेपि हेतुविशिष्टपर्वतत्वाद्यवच्छिन्नसंयोदिसंसर्गकानुमितेरेवाभ्युपगमे पर्वतत्वादिसामानाधिकरण्यमात्रावगाहिबाधादिग्रहकालेऽपि

[दी] तेनैकत्र हेतौ व्यभिचारादिग्रहेऽप्यन्यस्य परामर्शादनुमित्युत्पादेन

---

तथाविधसाध्यनिश्चयवतोऽनुमित्यापत्तेः । न हि सामानाधिकरण्येन बाधसिद्ध्योः सत्योरनुमितिं कश्चिदुपैति, तादृशबाधादिग्रहस्य क्वचिदप्यनुमितौ प्रतिबन्धकत्वासम्भव तेषां हेत्वाभासताविलोपापत्तेश्चेति चेत्, एवमपि लिंगानुपधानमते तादृशविषयतायां मानाभाव एव । प्रकृतग्रन्थस्तु न लिंगोपधानमताभिप्रायकः तन्मतेऽनुमितेः सर्वत्रैव तदाकारतया तादृशाकारत्वस्याव्यावर्त्तकतया अनुमितिपदस्य तादृशाकारपरत्वेन वर्णनासंगतेः ।

केचित्तु लिंगानुपधानमतेऽनुमितिपदस्य तदुभयपरत्वं व्याख्याय यथाश्रुतार्थपरतानिर्वाहाय लिंगोपधानमतमेवाऽऽश्रयते साध्यव्याप्येत्यादिना । इत्याकारकानुमितिपदं अनुमितेरित्याकारतामताभिप्रायकमिति व्याचक्षते ।

व्याख्याप्रयोजनं स्फुटयति तेनेति । एकत्र—वह्नित्वाद्येकधर्मावच्छिन्ने । व्यभिचारादीत्यादिना स्वरूपासिद्ध्यादिपरिग्रहः । अन्यस्यपरामर्शात्-तद्वह्नित्वादिरूपापरधर्मावच्छिन्ने व्याप्तिपक्षधर्मताद्यवगाहिज्ञानात् । व्यभिचारादित्यस्या "नुमित्यजनकत्वेऽपी" त्यनेन सम्बन्धः । यत्र यद्रूपावच्छिन्ने व्यभिचारज्ञानोत्पत्तिद्वितीयक्षणे कथञ्चित्तद्रूपावच्छिन्नलिंगकपरामर्शः, तत्र क्षणैकविलम्बेनानुमित्युपगमे व्यभिचारासम्भवात् न तत्र व्यभिचारो दर्शितः ।

ननु तद्धर्मावच्छिन्नलिंगकानुमितौ तद्धर्मावच्छिन्नधर्मिकव्यभिचारादिज्ञानाभावस्य हेतुत्वोपगमात् नोक्त व्यभिचारः । तद्धर्मावच्छिन्नलिंगकत्वं च अव्यवहितोत्तरत्वसम्बन्धेन तद्रूपावच्छिन्नधर्मिकव्याप्त्यादिज्ञानविशिष्टत्वम्, तादृशसम्बन्धेन व्यभिचारज्ञानविशिष्टं यत्

[दी] व्यभिचाराद्व्याप्त्यादिज्ञानेनान्यथासिद्धत्वाच्च व्यभिचारादिग्रहाभावस्यानुमित्यजनकत्वेऽपि न क्षतिरिति वदन्ति । पर्वतो निर्वह्निर्धूमो वह्नेरभिधेयत्वं वा मेयत्वस्य व्यभिचारीत्यादिभ्रमादप्यनुमितिप्रतिबन्धादाह-यथार्थ इति ।

---

तदन्यत्वमेव वा जन्यतावच्छेदकं वाच्यम्, तेन 'धूमव्याप्यवह्निमानय' मित्याकारकशाब्दादिपरामर्शोत्पत्तिद्वितीयक्षणे यत्र लौकिकसन्निकर्षजन्यो 'धूमव्यभिचारी वह्निर्धूमव्याप्येन्धनवान्' इत्याकारकसमूहालम्बनग्रहस्तत्र तज्जन्यानुमितेरुक्तसम्बन्धेन वह्नित्वावच्छिन्नधर्मिकव्याप्त्यादिज्ञानविशिष्टत्वेऽपि न क्षतिरित्यत आह—व्याप्त्यादी ति । क्लृप्तकारणताकव्याप्त्यादिज्ञानसत्त्वे व्यभिचारज्ञानाद्यभावव्यतिरेकेणानुमितिव्यतिरेकस्यासिद्धत्वादिति भावः ।

व्याप्तिज्ञानादेर्व्यभिचारज्ञानाभावेनाऽन्यथासिद्धत्वशंका प्रागेव निरस्कृता । न क्षतिः—न व्यभिचारादावव्याप्तिः । यत्रासद्धेतुविशेषे तादृशानुमितेरप्रसिद्धि स्तत्रत्यदोषेष्वव्याप्तेर्वक्ष्यमाणतया एतादृश यथाश्रुतव्याख्यायामनिर्भरसूचनाय वदन्तीत्युक्तम् । 'पर्वतो वह्निमान् धूमा' दित्यादिसद्धेतुस्थले बाधादिभ्रमविषयेऽतिव्याप्तिवारकतया यथाश्रुते यथार्थपदं सार्थकयति—पर्वतो निर्वह्निरिति । अत्र इति पदस्य स्थलत्रये प्रत्येकं सम्बन्धात् भ्रमत्रयलाभः, प्रत्येकभ्रममादायैवातिप्रसंगसम्भवात् तादृशसमूहालम्बन (भ्रमपर्यन्तानुधावने वैफल्यादिति) परत्वासङ्गतेरिति ध्येयम् ।

---

प्रथमभ्रमोऽनुमितौ विरोधी, अन्त्यौ च तज्जनकज्ञाने तथा, तयोरपि प्रथमेऽन्यत्र प्रसिद्धस्य साध्याभाववदवृत्तित्वस्य धूमादंशे भ्रमत्वम् । अन्त्ये च प्रमेयत्वाभाववदवृत्तित्वस्याप्रसिद्ध्या न तद्भ्रमत्वम्

किन्तु आम्नायांशे अनुयोगिताविशेषसम्बन्धेन साध्यस्य भ्रमत्वमिति एतादृशविशेषमाहृत्य शिष्यव्युत्पादनायानेकविधभ्रमप्रदर्शनम् ।

इदन्तु अवधेयम्—अभिधेयत्वं प्रमेयत्वव्यभिचारीत्यत्र स्वरूप-सम्बन्धावच्छिन्नप्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रमेयत्वस्य-भ्रमो वाच्यः; प्रतियोगितांशे साध्यतावच्छेदकावच्छिन्नत्वसाध्यता वच्छेदकसम्बन्धावच्छिन्नत्वयोः साध्याभाववदवृत्तित्वरूपव्याप्तिघटक-तया तदंशे तदुभयावगाहिव्यभिचारज्ञानस्यैव व्याप्तिज्ञानविरोधित्वात् । एवञ्च भेदादौ प्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वस्य प्रसिद्धावपि स्व-रूपसम्बन्धावच्छिन्नतादृशप्रतियोगिताकत्वाप्रसिद्ध्या तादृशभ्रमानुपपत्तिः । प्रतियोगितांशे सम्बन्धविशेषावच्छिन्नत्वस्य भ्रम इत्यपि न युक्तम् । तस्य सम्बन्धघटकतया तत्प्रकारकत्वघटिततद्भ्रमत्वानुपपत्तेः । न च तेन रूपेण प्रतियोगिताप्रकारक एवात्र भ्रमो विवक्षितः, न तु तदवच्छिन्नप्रतियोगिताकत्वसंसर्गक इति वाच्यम्; लाघवात् प्रति-योगितासंसर्गकव्याप्तिज्ञानस्यैवानुमितिहेतुतया तत्प्रकारकव्यभिचारज्ञान-स्याकिञ्चित्करत्वात् ।

अत्राहुः—स्वावच्छिन्न-साध्यतावच्छेदकसम्बन्धावच्छिन्न-प्रतियोगि-ताकत्वसम्बन्धेन साध्यतावच्छेदकवत्त्वमेव अभावस्य साध्याभाववदवृत्ति-त्वरूपव्याप्तिघटकम् लाघवात्; एवञ्च, तादृशसम्बन्धेनाभावांशे साध्यता-वच्छेदकप्रकारकव्यभिचारज्ञानस्य व्याप्तिग्रहविरोधितया घटत्वादेः प्रसिद्धेन तादृशसम्बन्धेन प्रमेयत्वत्वादेरभावांशे भ्रमात्मक एव तथाविधग्रहो विवक्षित इति न किञ्चिदनुपपन्नम् ।

(अन्ये तु)-प्रथमे साध्याभाववदवृत्तित्वज्ञानविरोधी हेतौ साध्या-भाववद्वृत्तित्वरूपव्यभिचारस्य भ्रमः, द्वितीये च तदप्रसिद्ध्या व्यापक-सामानाधिकरण्यग्रहविरोधी साध्यतावच्छेदके हेतुसमानाधिकरणाभाव-

[दी] ननु प्रतिबन्धकज्ञानविषयव्यभिचारादिघटकसाध्यादेरपि प्रत्येकं हेत्वाभासतापत्तिः । अथ विशिष्टविषयकं ज्ञानं प्रतिबन्धकम् , तद्घटकञ्च न विशिष्टमिति चेत्तर्हि 'यथार्थे' ति व्यर्थम् , भ्रमविषय विशिष्टस्या ऽप्रसिद्धत्वादित्यनुशयेनाह-यदि ति ।

---

प्रतियोगितावच्छेदकत्वस्य भ्रमोऽभिमतः, असमानप्रकारकज्ञानस्याविरोधितया द्विविधव्यभिचारं ... य. द्विविधव्याप्तिविषयकसमूहालम्बनज्ञानस्यैव लक्षणे निवेश्यत्वात् । न च 'हेतुः साध्यस्य व्यभिचारी' इत्यतः साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्य दुर्लभतया तदवगाहिज्ञानस्य 'अभिधेयत्वं प्रमेयत्वस्य व्यभिचारी' त्याकारकता नोपपद्यते इति वाच्यम् ; यतोऽभाववद्वृत्तित्वं समानाधिकरणाभावप्रतियोगितावच्छेदकत्वं चेति द्वयमेव, हेतुः साध्यस्य व्यभिचारीत्यत्र व्यभिचारपदार्थः । तत्र प्रथमव्यभिचारपदार्थैकदेशे अभावे अनुयोगितारूपषष्ठ्यर्थस्य, तत्र प्रकृत्यर्थतावच्छेदकवह्नित्वाद्यवच्छिन्ननिरूपितत्वसम्बन्धेन प्रकृत्यर्थस्यान्वयः । मत्वर्थीयार्थश्च स्वरूपसम्बन्धवान् ; तस्याभेदेन प्रथमान्तार्थेऽन्वयः । द्वितीय तत्पदार्थपरवाक्यस्थले च तदेकदेशसामानाधिकरण्ये हेतुपदार्थान्वितप्रथमार्थनिरूपितत्वस्यान्वयः । षष्ठीप्रकृतेस्तद्धर्मपरतया षष्ठ्यन्तार्थस्य साध्यतावच्छेदकनिष्ठत्वस्य तादृशान्वयबललभ्यहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वे, तस्य च तद्धितार्थसम्बन्धिनि एकदेशे घटकत्वरूपसम्बन्धे, सम्बन्धिनश्चाभेदेन प्रथमान्तार्थेऽन्वयः । एवञ्चोक्तवाक्यात् तत्र साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्यापि लाभात् तत्र तदवगाहिभ्रमस्य दर्शिताकारतासम्भवादित्यपि वदन्ति ।

भ्रमा दिति । पञ्चम्यर्थः प्रयुक्तत्वम्; तस्य प्रतिबन्धकपदार्थेऽनुत्पादेऽन्वयः । यथार्थेती ति । यथार्थपददानेन स्वव्यधिकरणप्रकारावच्छिन्ना

[दी] केचित्तु—दुष्टानामेव हेतूनामेतानि लक्षणानि, तत्र तृतीयमिव प्रथममपि ज्ञायमानव्यभिचारादेः प्रतिबन्धकत्वमभ्युपेत्य । तदर्थश्च तादृशाभावप्रतियोगिनो ये व्यभिचारादयस्तत्प्रकारकयथार्थज्ञानविषयत्वम्। अग्रे च तत्त्व मित्यस्य तद्वत्त्वमित्यर्थः । आद्यस्यैव वा दुष्टहेतुलक्षणाभिप्रायकत्वमिति प्राहुः ।

---

या या विषयता तत्तदनिरूपकत्वरूपस्य सर्वत्रै प्रमात्वस्य विवक्षणीयतया दर्शितभ्रमाणां किञ्चिदंशे प्रमात्वेऽपि न तमनादाय दोष इति भावः । अत्र यथार्थपदेन सद्धेतुस्थलेऽनुमितिविरोधिभ्रमविषयसाध्याभावादावति-प्रसंगवारणेऽपि असद्धेतुस्थले तादृशभ्रमविषयदोषघटकसाध्यादेः प्रत्येकम् दोषत्वापत्तिर्दुर्वारैवेति तदर्थं प्रकारान्तरानुसरणे च तत एव पूर्व-दोषस्यापि वारणसम्भवे यथार्थपदं व्यर्थमिति दोषस्य दुरुद्धरतया तस्यैव यथार्थपदाघटितलक्षणान्तरानुसरणे बीजत्वमाह-नान्वे ति । एक-देशस्यापि विशिष्टघटकतया हेत्वाभासपदार्थत्वस्य इष्टत्वादाह प्रत्येक-मिति । प्रत्येकपदार्थपर्याप्तसाध्यतावच्छेदकाद्यवच्छिन्नस्येत्यर्थः ।

**हेत्वाभासतापत्तिः**—हेत्वाभासपदार्थत्वापत्तिः । यद्रूपावच्छिन्न-ज्ञानस्यानुमित्यविरोधित्वं तद्रूपावच्छिन्ने हेत्वाभासत्वव्यवहारस्य तद्रूपा-वच्छिन्नमात्रज्ञानाद्धेतोर्दुष्टत्व व्यवहारस्य चानुदयेन अत्रेष्टापत्तिर्न सम्भव-तीति भावः । यादृशविशिष्ट विषयकत्वं तादृशानुमितिविरोधितान-तिरिक्तवृत्ति, तत्त्वमिति विवक्षया साध्याभावादौ नातिव्याप्तिरित्याशयेनाशंकते-अथेति । विशिष्टविषयकम्-साध्याभाववद्वृत्तित्वविशिष्टसाध-नादिविषयकमेव । तद्घटकं च—तादृशविशिष्टघटकप्रत्येकपदार्थवि-षयकत्वञ्च । न विशिष्टम्-न तादृशविशिष्टनिरूपितम् । तथा च प्रत्येकपदार्थविषयकत्वस्य प्रतिबन्धकतातिरिक्तवृत्तित्वात् नातिव्याप्तिरिति

ऽयर्थं मिति । यथार्थपदानुपादानेऽपि सद्धेतुस्थलेऽतिव्याप्तिवारण-सम्भवात् । ननु तत्र भ्रमविषयप्रत्येकपदार्थस्योक्तरीत्या वारणेऽपि तद्विषयविशिष्टेऽतिव्याप्तिरत आह-भ्रमाविषये ति । अप्रसिद्धत्वा दिति । तथा च कातिव्याप्तिरिति भावः । केचित्त्व ि। नन्वस्य दुष्टहेतुलक्षणत्वे दोषेष्वतिव्याप्तिः, तेषामप्यनुमितिविरोधियथार्थज्ञानविषयत्वात् । न च ह्रदादिपक्षकवह्न्यादिसाध्यकस्थले वह्न्यभाववद्ध्रदादिरूपदोषाणामपि दुष्टहेतुत्वमिष्टमेवेति वाच्यम्; तद्रूपावच्छिन्नपक्षकतद्रूपावच्छिन्नसाध्यक-तद्रूपावच्छिन्नहेतुकस्थले तेन रूपेण दुष्टस्य लक्षणं यदि तद्रूपावच्छिन्न-पक्षसाध्यहेतुकानुमिति विरोधि यथार्थज्ञानविषयत्वमात्रम्, तदा ह्रदत्वा-वच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकानुमितिप्रतिबन्ध-कप्रमाविषयवह्न्यभाववद्ध्रदादीनां धूमत्वादिना दुष्टत्वाभावादति-व्याप्तिरित्याशंकां परिजिहीर्षुः तादृशाभावप्रतियोगिनां यथार्थज्ञानमिति षष्ठीसमासमाश्रित्य तादृशाभावप्रतियोगिप्रकारकयथार्थज्ञानविषयत्वमर्थो व्याख्यास्यते । तच्च ज्ञायमानदोषस्य प्रतिबन्धकतामतएव संगच्छते, अतस्तन्मतमवलम्बते-तत्रेति । तेषु लक्षणेषु मध्ये इत्यर्थः ।

तृतीयलक्षणस्य सर्वमतएव ज्ञायमानदोषप्रतिबन्धकतामताभिप्रायक-तया दृष्टान्तत्वेनोपन्यासः । तदर्थश्चे ति । प्रथमलक्षणार्थश्चेत्यर्थः । प्रतियोग्यन्तेन दोषानादाय लक्षणं संगमनीयमिति दर्शयितुं व्यभि-चारादय इति । न तु तेन रूपेण लक्षणघटकत्वमित्यवधेयम् । एवञ्च यथार्थपदादाने दुष्टत्वभ्रममादाय प्रकृतहेतुभिन्नेऽतिप्रसंग इति यथार्थपदसार्थक्यम् । यद्यपि पर्वतत्वाद्यवच्छिन्ने वह्नित्वाद्यवच्छिन्न-साधने धूमत्वाद्यवच्छिन्नो दुष्ट इत्यादेः सद्धेतौ दुष्टत्वव्यवहारस्य नापत्तिः, तत्र तत्साध्यपक्षहेतुकानुमितिप्रतिबन्धकरूपदोषप्रकारक-ज्ञानविषयत्वस्यैव प्रत्येतव्यत्वात्तादृशानुमिति प्रतिबन्धकबाधव्यभि-चारादेश्चाप्रसिद्धत्वात् । ह्रदादौ वह्न्यादिसाधनमादाय सर्वत्रैव दुष्टत्व-

व्यवहार इष्टः; तथापि धूमसाधने वह्नित्वेनायं दुष्ट इत्यादौ वह्नित्वाद्यवच्छिन्नहेतुकधूमत्वाद्यवच्छिन्नसाध्यकानुमितिप्रतिबन्धकदोषप्रकारकज्ञानविषयत्वस्यप्रत्ययात् वक्ष्यमाणसम्बन्धावच्छिन्नतादृशानुमिति प्रतिबन्धकधूमाभाववद्वृत्तित्वविशिष्टवह्न्यादिरूपप्रसिद्धदोषप्रकारताशालिभ्रममादाय रासभादितात्पर्येणापि तथा व्यवहारः स्यात् ।

न च तत्र विशेष्ये तृतीयान्तार्थवह्नित्ववैशिष्ट्यभानात् रासभांशे तद्बाधेन नायमतिप्रसंग इति वाच्यम्; तथा सति दोषपदार्थघटकानुमितौ वह्नित्वावच्छिन्नहेतुकत्वालाभात् तल्लाभानुरोधेन हेतुप्रकारकज्ञानजन्यानुमितिप्रतिबन्धकरूपदोषपदार्थघटकहेतौ वह्नित्ववैशिष्ट्यरूपस्य तृतीयान्तार्थस्य तत्प्रकारतायांवाऽवच्छिन्नत्वार्थकतृतीयान्तशुम्यवह्नित्वाद्यवच्छिन्नत्वस्य अन्वय इत्येव उपगन्तव्यत्वात् ।

न च विशेष्ये वह्नित्वादिधर्मवैशिष्ट्यबोधकपदसमभिव्याहारस्थले दोषार्थकधातोरेव वह्नित्वावच्छिन्नहेतुकाऽनुमितिप्रतिबन्धको ऽर्थः । अथवा ऽनुमित्यर्थकसाधनशब्दस्यैव वह्नित्वाद्यवच्छिन्नहेतुकानुमिति रूपविशेषलाक्षणिकत्वं धात्वर्थेऽनुमित्यन्तर्भावे साधनपदार्थानन्वयप्रसंगात् । तथा च विशेष्य एव तृतीयान्तार्थवैशिष्ट्यान्वयोपगमान्नोक्तातिप्रसंगः इति वाच्यम्; एवमपि वह्निना धूमसाधने 'रासभो दुष्टः' इत्यादि व्यवहारस्य भ्रममादायातिप्रसङ्गात् यथार्थपदसार्थक्यम् ॥ अथवा इतरभेदानुमापकमेवेदं लक्षणम्, तथाच पर्वतपक्षकधूमसाध्यकवह्निहेतुकदुष्टलक्षणस्य तथाविधानुमितिविरोधिव्यभिचारादिभ्रममादाय सद्धेतौ इतरभेदव्यभिचारात् यथार्थपदसार्थक्यम् । ज्ञानं च अत्र स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धावगाहि ग्राह्यम् । तेन प्रकृतहेतुभिन्नस्यापि सम्बन्धान्तरेण दोषभ्रमाविषयत्वेऽपि नातिप्रसङ्गः । अग्रेऽपि ईदृशसम्बन्धेनैव तद्वत्त्वं वाच्यम् ।

अथ ज्ञायमानपक्षनिष्ठसाध्याभावत्वादिना बाधादिदोषाणां प्रतिबन्धकता न सम्भवति, साध्याभावत्वादिना पदार्थान्तरस्यैव यत्र ज्ञानं तत्र दोषाणामज्ञायमानतया अविरोधित्वेन अनुमित्यापत्तेः ; किन्तु ज्ञानीयपक्षतावच्छेदकाद्यवच्छिन्नविषयतानिरूपितसाध्याभावत्वाद्यवच्छिन्नविषयतावत्त्वेन तादृशविषयतया ज्ञानाविशिष्टत्वेन वा, तच्च रूपं तादृशभ्रमविषयपदार्थान्तरसाधारणमेवेति तेषामेव तादृशभ्रमदशायां विरोधित्वान्नोक्तापत्तिः । एवञ्च सद्धेतूनामपि प्रतिबन्धकतावच्छेदकनिरुक्तविषयताश्रयवह्न्यभावादिभ्रमाविशेष्यत्वादतिव्याप्तिरिति चेन्न ; यद्रूपावच्छिन्नविषयतासामान्यं प्रकृतानुमितिप्रतिबन्धकतावच्छेदकं तद्रूपविशिष्टप्रकारकप्रमाविशेष्यत्वमेव विवक्षणीयम् । 'ह्रदो वह्निमान् धूमा' दित्यादौ च तादृशं रूपं ह्रदविशिष्ट वह्न्यभावत्वादिकम् ; 'ह्रदे वह्निर्नास्ति' इत्यादिज्ञाननिरूपितयद्रूपावच्छिन्नविषयतासामान्यस्यैव ह्रदत्वाद्यवच्छिन्नविषयतानिरूपितवह्न्यभावत्वाद्यवच्छिन्नविषयतात्वेन दोषनिष्ठानुमितिप्रतिबन्धकतायामवच्छेदकत्वात् । सद्धेतुस्थले च तादृशं रूपं न केवलवह्न्यभावत्वादिकम्, तदवच्छिन्नविषयतासामान्यान्तर्गतधर्म्यविषयकज्ञान निरूपिततादृशविषयतानामनुमितिप्रतिबन्धकतानवच्छेदकत्वात् पर्वतविशिष्टवह्न्यभावत्वादिविशिष्टं च न किञ्चिद्वस्तु प्रसिद्धमिति नातिप्रसङ्गः ।

तृतीयमपि लक्षणमनयैव रीत्या परिष्करणीयमिति । इदं तु बोध्यम्=यद्यपि अस्य दुष्टहेतुलक्षणत्वे ज्ञायमानदोषप्रतिबन्धकतामतानाश्रयणेऽपि यद्रूपावच्छिन्नपक्षसाध्यहेतुकानुमितिप्रतिबन्धकप्रमाविषय तद्धेतुतावच्छेदकवत्त्वं तद्रूपावच्छिन्नपक्षसाध्यकहेतुस्थले तेनैव रूपेण दुष्टत्वमित्यर्थकतामुपगम्य यथार्थपदसार्थक्यमुपपादयितुं शक्यते । तथापि दुष्टलक्षणस्य दोषघटितत्वानुरोधेन तन्मतमवलम्ब्य षष्ठीसमास आदृत इति ।

[दी] लिङ्गमविवक्षितम् । यद्विषयकत्वेन—यादृशविशिष्टविषयकत्वेन । तेनानुमितिप्रतिबन्धकपक्षविशेष्यकभ्रमविषये साध्याभावादौ सद्धेत्वादिनिष्ठे नातिप्रसङ्गः ।

---

ननु द्वितीयतृतीयलक्षणयोर्दोषेष्वतिव्याप्तिरव्याप्तिश्च क्वचिद्धेतौ यत्पदेन दोषस्यैवोपादेयतया तत्त्वस्य तन्मात्रवृत्तित्वादत आह—तत्त्वमित्यस्ये ति । प्रथममात्रस्य दुष्टलक्षत्वेनैवोपपत्तौ चरमयोर्दोषलक्षणत्वमेवोचितम्, तत्त्वमित्यस्य यथाश्रुतार्थकत्वानुरोधादतस्तथैवाह—आद्यस्यैवे ति । ईदृशव्याख्याया निर्दोषत्वात् प्राहुरित्युक्तम् ॥

॥ इति प्रथमलक्षणम् ॥

लिंगज्ञानस्ये ति मूले लिङ्गांशनिवेशस्य अनतिप्रयोजनकतया तस्याविवक्षितत्वमाह—लिंगमिति । "यद्विषयकत्वेन" इत्यत्र तृतीयार्थो ऽवच्छेदकत्वम्, तच्चेदनतिरिक्तवृत्तित्वरूपमिदानीं निवेश्यते, तदाऽसम्भवः, विशिष्टस्यानतिरिक्ततया वह्न्यभावविशिष्टह्रदादिरूपदोषविषयकत्वस्य शुद्धह्रदत्वाद्यवच्छिन्नविषयकज्ञानेऽपि सत्त्वेनानुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वात् अतः स्वरूपसम्बन्ध रूपमेव तद्वाच्यम्, तथाच 'पर्वतो वह्निमा' नित्याद्यनुमितिप्रतिबन्धकभ्रमविषयवह्न्यभावादावतिव्याप्तिः, तद्विषयकत्वस्यापि प्रतिबन्धकतावच्छेदकघटकत्वात् असम्भवभयेन चावच्छेदकतापर्याप्तिनिवेशनासम्भवात् । अतो यद्विषयकत्वेनेति पदं व्याचष्टे—यादृशविशिष्टविषयकत्वेने ति ।

यादृशविशिष्टविषयकत्वेन—यद्रूपावच्छिन्नविषयताकत्वेन । एवञ्च तत्त्व मित्यस्य तद्रूपावच्छिन्नत्वमित्यर्थः । व्याख्याप्रयोजनं प्रकाशयति—तेने ति । यत्प्रकारत्वेन अनुमिति प्रतिबन्धकत्वमित्युक्तौ पक्षविशेषणकभ्रममादाय वह्न्यभावादौ नातिप्रसङ्गसम्भवः । पर्वता—

दावतिप्रसङ्गसम्भवेऽपि यत्सम्बन्धावच्छिन्नयन्निष्ठप्रकारताकत्वेनानुमिति-प्रतिबन्धकत्वं तेन सम्बन्धेन तद्वत्त्वस्य दुष्टताव्यवहारनियामकत्वोपगमे पर्वतविशेषणकवह्न्यभावज्ञानस्य विशेषणताविशेषावच्छिन्नाधेयता-संसर्गावच्छिन्नपर्वतादिनिष्ठप्रकारताकत्वेन प्रतिबन्धकत्वात् तेन सम्बन्धेन पर्वतादिमत्तायाः पर्वतमहानसान्यतरत्वादिरूपसद्धेतौ सत्त्वेऽपि प्रसिद्धधूमादिरूपहेतावसत्त्वात्तत्र दुष्टताव्यवहारापत्तेरयोग इति तदनुरोधेन पक्षविशेष्यके त्युक्तम् ।

भ्रमपदं निश्चयसामान्यपरम्, तेन सद्धेत्वादीत्यादिपदग्राह्यसाध्य-शून्यपक्षकदुष्टहेतौ अनुमितिप्रतिबन्धकप्रमाविषयसाध्याभावादेरेव सत्त्वे ऽपि नासंगतिः । नातिप्रसंग इति । उक्तव्याख्यानेऽनतिरिक्तवृत्तित्वरूपमेवाव-च्छेदकत्वं विवक्षणीयम्, विशेषणीभूतवह्न्यभावाद्यविषयके शुद्धह्रदत्वादिना वह्न्यभावविशिष्टह्रदादिविषयकज्ञाने वह्न्यभावविशिष्टह्रदत्वाद्यवच्छिन्नविल-क्षणविषयतानिरूपकत्वस्यासत्त्वनोक्तासम्भवानवकाशात् । तथा च केवलवह्न्यभावत्वाद्यवच्छिन्नविषयताकत्वस्य प्रतिबन्धकतातिरिक्तवृत्तित्वात् नातिप्रसंग इत्यर्थः ।

ननु स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशेऽप्ययमेवातिप्रसंगो दुर्वारः । अप्रामाण्यज्ञानाभावादिविशिष्टयद्रूपावच्छिन्नविषयकनिश्चयत्वं प्रतिबन्ध-कतावच्छेदकः पर्याप्त्यधिकरणमित्येतादृशविवक्षया तादृशातिप्रसंगवा-रणे पुनरसम्भवः, वह्न्यभावत्वादिना घटाद्यवगाहिनो 'वह्न्यभाव-वान् ह्रद' इत्यादिज्ञानस्यापि प्रतिबन्धकतया तत्साधारण्यानुरोधेन वह्नित्वाद्यवच्छिन्नप्रकारतानिरूपिताऽभावत्वाद्यवच्छिन्नप्रकारतानिरूपितह्रद-त्वाद्यवच्छिन्नविशेष्यताकनिश्चयत्वेनैव प्रतिबन्धकताया वक्तव्यतया वह्न्यभावविशिष्टह्रदत्वाद्यवच्छिन्नविषयतायाः तादृशप्रकारतानिरूपित-ह्रदत्वाद्यवच्छिन्नविषयतात्वेनैवावच्छेदकत्वेऽपि अप्रामाण्यज्ञानाभावादि-

[दी] अवच्छेदकत्वञ्चेहाऽनातिरिक्तवृत्तित्वम् ;

---

विशिष्टवह्न्यभावविशिष्टह्रदत्वाद्यवच्छिन्नविषयताकनिश्चयत्वस्यावच्छेदकता-पर्याप्त्यनधिकरणत्वादित्यतः तृतीयाया अनतिरिक्तवृत्तित्वरूपावच्छेदकता-र्थकत्वं स्फुटयति अवच्छेदकत्वं चेति ।

इह—एतल्लक्षणे । घटकत्वं सप्तम्यर्थः । न च विशिष्टदोषविषयकत्वस्य संशयादौ सत्वात् पुनरसम्भव इति वाच्यम् , ज्ञानस्येत्यत्र ज्ञानपदमनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयपरम्, षष्ठ्यर्थश्च आधेयत्वम्, तस्य यद्विषयकत्वेऽन्वयः, एवञ्च तादृशनिश्चयवृत्तियादृश विशिष्टविषयकत्वमनुमितिप्रतिबन्धकतानातिरिक्तवृत्तितादृशत्वस्यविवक्षणीयतयाऽसम्भवानवकाशात् । अनतिरिक्तवृत्तित्वं च स्वव्यापकतत्कत्वम् । न तु तच्छून्यावृत्तित्वम् ; विशिष्टस्य विशेष्यीभूतविशिष्टविषयित्वानतिरिक्ततया, तस्यातिप्रसक्तत्वे विशिष्टे तस्मिन्ननतिप्रसक्तत्वस्य दुर्घटत्वात् ।

यत्तु प्रतिबन्धकताशून्यतादृशनिश्चयावृत्तित्वमेवानतिरिक्तवृत्तित्वम्, अतो नोक्तरीत्याऽसम्भव इति—तदसत् ; तथा सति मूलोपात्तस्य ज्ञानस्येत्यस्य वैयर्थ्यप्रसंगात् । ह्रदत्वाद्यवच्छिन्ना या वह्न्यभावविशिष्टह्रदत्वाद्यवच्छिन्नविषयकयत्किञ्चिज्ज्ञानीयविषयता तन्निरूपकत्वस्य प्रतिबन्धकताशून्यतादृशनिश्चयावृत्तित्वेन शुद्धह्रदत्वावच्छिन्नेऽतिप्रसंगाच्च । अस्मन्मते अनुमितिप्रतिबन्धकतायाः तादृशनिश्चयवृत्तित्वविशिष्टह्रदत्वाद्यवच्छिन्नविषयिताकत्वत्वाद्यवच्छिन्नव्यापकताविरहेणातिप्रसंगानवकाशात् ।

अथैवमपि जातित्वादिना ह्रदत्वादिविषयकस्य 'जातिमान् वह्न्यभाववा' नित्यादिज्ञानस्यापि वह्न्यभावविशिष्टह्रदत्वाद्यवच्छिन्न

[दीं] तेन विशिष्टस्याऽसत्त्वेपि

---

विषयकतया तस्य च 'ह्रदो वह्निमा' नित्याद्यनुमित्यविरोधितया ऽसम्भवः । 'जलवान् वह्निमां' नित्यादिस्थलीयदोषासंग्रहेण अविशेषितधर्मावच्छिन्नपक्षादिस्थलीयस्यापि किञ्चिद्विशिष्टतद्घटित दोषस्यासंग्रहेण च पक्षतावच्छेदकाद्यंशे अन्याप्रकारत्वादिनिवेशस्याशक्यत्वात् । तादृशविशिष्टाघटकपदार्थविषयकत्वस्य ज्ञाने विशेषणत्वोपगमे 'सर्वमाकाशव' दित्यादिस्थलीयबाधादौ तद्घटकाप्रसिद्ध्या अव्याप्तिः।

यद्यद्रूपावच्छिन्नस्य यस्य यस्य तादृशविशिष्टघटकता तत्तद्रूपावच्छिन्नतत्तद्विषयताभिन्नकिञ्चिदवच्छिन्नविषयताशून्यत्वं ज्ञाने निवेश्यम् । जातित्वाद्यवच्छिन्नस्य च ह्रदत्वादेर्न वह्न्यभाववद्ध्रदत्वाद्यवच्छिन्नात्मकदोषघटकतेति जातित्वाद्यवच्छिन्नह्रदत्वादिविषयता तादृशविषयताभिन्नैव, तच्छून्यत्वं च नोक्तज्ञानस्येति न दोष इत्यपि न सत्=तथा सति 'ह्रदो जात्यभाववान्' इत्यादिस्थलीयबाधादेः दुस्संग्रहत्वात् । जातित्वादिना ह्रदत्वादिरूपधर्मितावच्छेदकावगाहिनो 'जातिमान् जातिमान्' इत्यादिज्ञानस्य जातित्वाद्यवच्छिन्न ह्रदत्वादिनिष्ठधर्मितावच्छेदकतारूपविषयताया निरुक्तविषयताभिन्नत्वविरहेण तादृशज्ञानस्य अनुमित्यप्रतिबन्धकस्य शून्यत्वान्तेनावारणात्=

मैवम् । यद्रूपावच्छिन्नविषयतात्वं तादृशविशिष्टविषयकत्वसमानाधिकरणाभाव-प्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयताशून्यत्वस्य ज्ञानविशेषणतया सामञ्जस्यात् अप्रतिबन्धकज्ञानविषयतावच्छेदकजातित्वादिविशेषितह्रदत्वादिघटित-तत्तद्रूपावच्छिन्न विषयतात्वावच्छिन्नाभावस्य दोषात्मकविशिष्टविषयितासमानाधिकरणत्वात् तज्ज्ञानव्यावृत्तिरिति निष्कर्षः ।

विशिष्टस्य विशिष्टविषयकत्वस्य । असत्त्वेपि– वह्न्यभावत्वा-

[दी] भ्रमात् प्रतिबन्धेऽपि न क्षतिः ।

---

दिना घटाद्यवगाहिनि भ्रमेऽसत्त्वेऽपि । तथा च विशिष्टविषयकत्वेन प्रतिबन्धकता न सम्भवतीति भावः । भ्रमात् प्रतिबन्धेऽपि-तादृशभ्रमस्यानुमित्यनुत्पादप्रयोजकत्वेऽपि । न क्षतिः—नोक्तयुक्त्या पर्याप्तिनिवेशेऽसम्भवः, तदनिवेशे पूर्वोतिप्रसंगो वा । ननु विशिष्टदोषघटकीभूततदेकदेशविषयितायां स्वरूपसम्बन्धरूपावच्छेदकत्वसत्त्वेऽपि विशिष्टविषयितासामान्यस्य तादृशावच्छेदकत्वविवक्षया-अतिप्रसंगवारणसम्भवात् तदेव कथं न विवक्षितमिति ।

न च सामान्यपदस्य व्यापकत्वार्थकतया प्रतिबन्धकतावच्छेदकतायां विशिष्टविषयितात्वव्यापकत्वं प्रवेश्यम्, तदपेक्षया प्रतिबन्धकतायां विशिष्टविषयिताव्यापकत्वनिवेशनमेवोचितमिति वाच्यम्; यतो वह्न्यभावविशिष्टह्रदादिनिरूपितविषयिताया अनुमित्यप्रतिबन्धक-संशयाहार्याप्रामाण्यज्ञानास्कन्दितज्ञानसाधारणतया नानुमितिप्रतिबन्धकतायास्तद्व्यापकत्वमित्यनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयिताव्यापकत्वं प्रतिबन्धकतायां भवता विवक्षणीयम्; तदपेक्षया लाघवेन स्वरूपसम्बन्धरूपावच्छेदकतायां बाधादिरूपदोषविषयितात्वव्यापकत्वमेव विवक्षितुमुचितम् । तथा सति निश्चयत्वाद्यनिवेशात् समानाकारकज्ञानेषु विषयिताया भेदस्याऽप्रामाणिकतया संशयादिज्ञानविषयिताया अपि निश्चयत्वादिविशिष्टीयतया प्रतिबन्धकतावच्छेदकतया प्रतिबन्धकतावच्छेदकताया अबाधात् प्रतिबन्धकतावच्छेदकतायां बाधादिरूपदोषनिरूपितविषयितात्वव्यापकताया अक्षतत्वात् ।

न च 'वह्न्यभाववान् ह्रदो वह्निमा' नित्याहार्यज्ञानीयवह्न्यभावविशिष्टह्रदादिविषयिता नानाहार्यज्ञानसाधारणी, तादृशाहार्य-

ज्ञानसमानाकारकानाहार्य्यज्ञानाप्रसिद्धेः । 'ह्रदो वह्न्यभाववा' नित्यनाहार्य्यज्ञानीय-वह्न्यभावविशिष्ट-ह्रदादिविषयितायाश्च वह्न्यादि-प्रकारतानिरूपिततादृशाहार्य्यज्ञानीयविशिष्टह्रदादिविषयिताया भिन्नत्वात् । तथा चानाहार्य्यज्ञानवृत्तित्वविशिष्टविषयिताया एव प्रतिबन्धकतावच्छेदक-तया न दर्शिताहार्य्यज्ञानीयविषयितासाधारणविशिष्टविषयितात्वव्याप-कत्वमिति वाच्यम्; एवं सति आनाहार्य्यज्ञानीयविशिष्टविषयिता-त्वव्यापकताया एव विवक्षणीयत्वात् । तावतापि संशयान्यत्वाप्रा-माण्यज्ञानानास्कन्दितत्वयोरप्रवेशेन लाघवानपायात् ।

मैवम् । स्वरूपसम्बन्धरूपावच्छेदकत्वप्रवेशे पाषाणमयत्वाद्य-वच्छेदेन वह्न्यभाववत्तानिश्चयविशिष्टस्य पाषाणमयत्वादिविशिष्ट पक्षा-देर्ज्ञानस्य वह्न्याद्यनुमितिप्रतिबन्धकतया तदवच्छेदकविषयिताकपाषा-णमयत्वादिविशिष्टपक्षादावतिव्याप्तेः । अनतिरिक्तवृत्तित्वरूपावच्छेदक-त्वनिवेशमते तादृशविशिष्टविषयितायाः पाषाणमयत्वाद्यवच्छेदेन वह्न्य भाववत्तानिश्चयाविशिष्टज्ञानसाधारणतया अनुमितिप्रतिबन्धकतातिरिक्त-वृत्तित्वेनातिप्रसंगानवकाशात् ।

न चानतिरिक्तवृत्तित्वरूपावच्छेदकत्वानिवेशपक्षेऽपि जलाद्यवच्छे-देन वह्न्यभाववत्ताघटितस्य वह्न्यभाववज्जलादिमद्वृत्तिजलादिविशिष्टस्य ह्रदादिरूपपक्षस्य 'जलवान् वह्न्यभाववान्' इत्यादिज्ञानसहितस्य 'जलवांश्च ह्रद' इत्यादिज्ञानस्य तादृशज्ञानविशिष्टतादृशज्ञानत्वेनैव प्रतिबन्धकतया तादृशप्रतिबन्धकताशून्यज्ञानाविषयस्य सत्प्रतिपक्षाव-नात्मकस्य वारणाय ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य प्रतिबन्धकतायाम-वश्यं निवेशनीयतया मन्मतेऽपि तत्र नातिप्रसंग इति वाच्यम्; ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य प्रतिबन्धकताविशेषणत्वे प्रतिहेतुव्यापक-साध्याभावसमानाधिकरणतद्धेतुमत्पक्षरूपसत्प्रतिपक्षाव्याप्तेः साध्याभा-वांशे तद्व्यापकताग्रहविशिष्टतद्वत्ताज्ञानत्वेन स्वतन्त्रसाध्याभावधर्मिकत-

विषयितायाः निरुक्तविरोधिविषयितानतिरिक्तवृत्तितया तत्रातिव्याप्तेर्वारकतया शेषसार्थक्यात् । तदुपादाने तादृशवह्न्यभावादिमत्त्वविषयकनिश्चयानन्तरं पर्वतत्वादिसामानाधिकरण्येन वह्न्याद्यनुमित्युत्पत्त्या तादृशानुमितौ तथाविधोभयसत्त्वेनातिव्याप्त्यनवकाशादिति—तत्तुच्छम् ; 'निर्वह्निः पर्वतो वह्निमा' नित्यादौ यत्र पर्वतत्वादिसामानाधिकरण्येन वह्न्यभावादेः पक्षतावच्छेदकघटकता तत्र पर्वतत्वादिसामानाधिकरण्येन वह्न्यादिमत्त्वस्य विशिष्टपक्षप्रसिद्धिविरोधित्वेनाश्रयासिद्ध्यनात्मकस्य हेत्वाभासान्तरताभयेनासम्भवद्दोषलक्षण ( लक्ष्य ) भावस्य निरुक्तविरोधिविषयितानतिरिक्तवृत्तिविषयिताकतया अतिव्याप्तेस्तादृशोभयाभावप्रतियोगितावच्छेदकगर्भे यद्रूपविशिष्टे येन सम्बन्धेन यद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वं निवेश्यते तद्रूपावच्छिन्नविशेष्यकतत्संसर्गक तद्रूपावच्छिन्नप्रकारकानुमितित्वावच्छिन्न निरूपितप्रतिबन्धकतावच्छेदकत्व रूपविरोधित्वस्य विषयितायाः निवेशे तु शेषवैयर्थ्यम् , उक्तरीत्या 'निर्वह्निर्वह्निमा ' नित्यादिस्थलीयदोषेऽव्याप्तिश्च ।

यत्तु—पक्षतावच्छेदकविशिष्टे निरुक्तसाध्यहेतुवैशिष्ट्यावगाहिनिश्चयावृत्तिविषयितैव विरोधिविषयितापदार्थः, तथा च यन्निरूपिततादृशविषयिताशालिनिश्चयोत्तरानुमितित्वव्यापकोभयाभाव स्तत्त्वमिति समुदितार्थः । निश्चयत्वञ्च विशेषणविशेष्यतावच्छेदकभावानापन्नविरोधिकोटिद्वयप्रकारकैकधर्मिविशेष्यकज्ञानान्यज्ञानत्वम् ; कोटिद्वये विशेषण विशेष्यतावच्छेदकभावानापन्नत्वनिवेशात्—' निर्वह्निः पर्वतो वह्निमा ' नित्यादौ पक्षतावच्छेदकविशिष्टे साध्यादिवैशिष्ट्यग्रहस्य एकत्र विरोधिद्वयप्रकारकत्वनियमेऽपि न तादृशवैशिष्ट्यावगाहिनिश्चयाप्रसिद्धिः । यदीयविषयिता तादृशनिश्चयावृत्तिः, तत्त्वमित्येतावति कृते ' ह्रदो वह्निव्याप्यधूमवान् ' इत्यादौ ह्रदादिनिष्ठवह्न्यभावादिमत्त्वेऽतिव्याप्तिः, वह्न्यादिव्याप्यवत्त्वनिश्चयस्यापि वह्न्यादिनिश्चयवत् कार्यसहभावेन

वह्न्यभावादिमद्विरोधित्वात् वह्न्यभावादिमत्त्वविषयितायास्तादृशनिश्चयावृत्तित्वादिति न शेषवैयर्थ्यमिति ;

तदपि न ; 'वह्निव्याप्यवान् वह्निव्याप्यव्याप्यवांश्च ह्रदो वह्न्यभाववान्' इत्येतादृशाहार्यज्ञानोपगमेन वह्न्यभावादिमत्त्वविषयितायाः वह्निव्याप्यादिमत्त्वनिश्चयवृत्तितया उक्तातिव्याप्त्यनवकाशेन शेषसार्थक्यानुपपत्तेः ! 'वह्निमान् वह्निव्याप्यवांश्च ह्रदो वह्न्यभाववान्' इत्येतादृशाहार्यसाध्यादिवैशिष्ट्यनिश्चये 'ह्रदो वह्निमा'नित्यादिप्रत्यक्षीयविषयितासत्त्वेनासम्भवप्रसंगाच्च । वह्न्यादिरूपधर्मितावच्छेदकानवच्छिन्नवह्न्यभावादिविशेषित ह्रदादिनिरूपितविषयितायाः साध्यादिनिश्चयावृत्तित्वेऽपि घटादिनिरूपितायाः अपि दोषविषयित्वावच्छिन्नायाः विषयितायाः साध्यादिनिश्चयावृत्तितया घटादावुदासीनेऽतिव्याप्तेर्वारणाय तादृशविशिष्टविषयितासामान्यं तादृशनिश्चयावृत्ति । तादृशविशिष्टनिरूपितविषयिताया एव विरोधिविषयितात्वेन विवक्षणीयतयाऽप्रतीकारात् ! सामान्यवृत्तियदीयविषयतासामान्यं तादृशनिश्चयावृत्ति तदीयविषयितायाः विवक्षणेन निर्वाहेऽपि विरोधियद्विषयितानिश्चयोत्तरानुमितिसामान्ये द्वयोर्व्यतिरेक इत्यनभिधाय यद्विषयकनिश्चयस्येत्यादिवक्राभिधानस्य ग्रन्थकारगीतविरुद्धत्वादिति ;

एतेन विषयितायाः उभयाभावप्रयोजकत्वं तादृशोभयाभावप्रतियोगितावच्छेदकं यद्रूपविशिष्टं येन सम्बन्धेन यद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वघटितं तद्रूपावच्छिन्नविशेष्यकतत्संसर्गकतद्रूपावच्छिन्नप्रकारकत्वविशेषितेनानुमितित्वेन ऽनाहार्यलौकिकसन्निकर्षाजन्यज्ञानत्वेन वा अवच्छिन्ना या प्रतिबध्यता तन्निरूपितप्रतिबन्धकतावच्छेदकत्वम् । एवञ्च यादृशविशिष्टविषयिता निरुक्ततथाविधोभयाभा-

प्रयोजकताश्रयस्तादृशत्वमेव लक्षणम्, विषयित्वादौ विरोधित्वादिकथनन्तु स्वरूपाख्यानमात्रमिति प्रलपितमप्यनादेयमेव । 'निर्वह्निर्वह्निमान्' इत्यादिस्थलीयदोषस्य उक्तयुक्त्या दुस्संग्रहत्वादिति चेत् ?

अत्र केचित्—कश्चिदित्यग्रिमकल्प इवात्रापि कल्पे न दीधितिकृतां निर्भरः, 'निर्वह्निर्वह्निमान्' इत्यादिस्थलीयदोषासंग्रहेणाऽस्वरसस्याग्रिमकल्पे कश्चि दित्यनेनेवात्रापि कल्पे वदन्तीत्यनेन सूचितत्वात् । निर्भरस्तु केचित्त्वि त्यादिकल्प एव ; अत एव तत्र प्रकर्षबोधनाय प्राहु रित्युक्तमित्याहुः ।

परे तु—घटाभावादिधर्मितावच्छेदककवह्न्यादिज्ञानं प्रति तद्धर्मितावच्छेदककवह्न्यभावादिमत्त्वज्ञानस्य प्रतिबन्धकत्वे कल्पनीये धर्मितावच्छेदकभेदेन तदकल्पनाप्रयुक्तलाघवानुरोधेन धर्मितावच्छेदकधर्मानिवेश्यानाहार्यवह्न्यादिविशिष्टबुद्धित्व,वह्न्यभावादिनिश्चयत्वाभ्यां समानधर्मितावच्छेदकत्वप्रत्यासत्त्यैव प्रतिबध्यप्रतिबन्धकभावः कल्प्यते ; एवञ्च तद्देशनिष्ठस्य पूर्ववृत्तिप्रतिबन्धकतानिरूपितप्रतिबन्धकतावच्छेदकसम्बन्धस्य उत्तरवृत्तिनिष्ठप्रतिबध्यतावच्छेदकसम्बन्धेन तद्देशासम्बन्धित्वं प्रति प्रयोजकतया वह्न्यभावादिनिष्ठवह्न्यभावादिप्रकारकज्ञानीयधर्मितावच्छेदकतायाः विषयितायास्तदुत्तरोत्पन्नानाहार्यवह्न्यादिप्रकारकज्ञानस्य वह्न्यभावादिधर्मितावच्छेदकत्वविरहप्रयोजकत्वात् वह्न्यभावादिविशिष्टे वह्न्यादिवैशिष्ट्यावगाहित्वविरहस्य वह्न्यभावादिधर्मितावच्छेदककवह्न्यभावादिप्रकारकनिश्चयविषयिताप्रयुक्तत्वमक्षतमेवेति तादृशनिश्चयविषयस्य दोषत्वमव्याहतमेव । न च धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या विपरीतज्ञानस्य प्रतिबन्धकत्वे 'निर्वह्निर्विशिष्यकवह्निज्ञानं जायता'मित्याकारकेच्छाजन्यस्य 'निर्वह्निर्वह्निमान्'

[दी] तादृशपक्षे तादृशसाध्यवैशिष्ट्यस्य तादृशसाध्यनिरूपित व्याप्तिविशिष्टतादृशहेतुवैशिष्ट्यस्य चावगाहिनो ज्ञानस्य यद्विषयकं ज्ञानं विरोधिविषयकं तत्त्वम् ; तादृशज्ञानविरोधित्वं वा हेतुदोषत्वम् ।

---

घटाभाववांश्च वह्निमा' नित्याद्यांशिकाहार्यज्ञानस्य विपरीतनिश्चयप्रतिबध्यतावच्छेदकानाक्रान्ततया 'घटाभाववान् वह्न्यभाववा' नित्यादिविपरीतनिश्चयकाले तथाविधेच्छासत्त्वे 'घटाभावविशिष्टविशेष्यकवह्निज्ञानं जायता' मित्याकारकेच्छां विनैव तादृशज्ञानापत्तिरिति वाच्यम् ; यतः सामान्यतो वह्न्यादिज्ञानेच्छाविशिष्टान्यत्वरूपमनाहार्यत्वं न प्रतिबध्यतावच्छेदककोटौ निवेशनीयम्, किन्त्वाहार्यज्ञानोपपत्त्यर्थं विशेष्यतानिष्ठं यत् स्वविषयतावच्छेदकत्वं तदवच्छेदकतावच्छेदकत्वसम्बन्धावच्छिन्न प्रतियोगिताकवह्न्यादिज्ञानेच्छाविरहस्य या स्वाव्यवहितप्राक्क्षणावच्छिन्नाधिकरणता तद्विशिष्टधर्मितावच्छेदकताया एव प्रतिबध्यतावच्छेदकसम्बन्धत्वमुपेयते, तादृशेच्छाविरहस्य प्रतिबन्धकविशेषणत्वमेव वा विशेषणता—विशेषधर्मितावच्छेदकतासम्बन्ध घटितसामानाधिकरण्यसम्बन्धेनोपगन्तव्यम् ; उक्तस्थले च घटाभावादौ तादृशेच्छाविरहस्य सत्त्वान्नोक्तापत्तिः, अधिकमन्यत्रानुसन्धेयमिति वदन्ति ।

'निर्वह्निः पर्वतो वह्निमा' नित्यादिस्थलीयदोषसाधारण्याय प्रकारान्तरेण लक्षणं व्याचक्षाणानां केषाञ्चिन्मतमाह—तादृशपक्ष इति । पक्षतावच्छेदकविशिष्टपक्ष इत्यर्थः । तादृशसाध्ये ति । साध्यतावच्छेदकविशिष्टसाध्ये त्यर्थः । तादृशहेत्वि ति । हेतुतावच्छेदकविशिष्टहेत्वित्यर्थः । ज्ञानस्य विरोधिविषयकं यद्विषयकं ज्ञानमिति योजना । ज्ञानम्—ज्ञानसामान्यम् ; तेन घटादि-

[दी] ज्ञानविरोधित्वञ्च तद्विषयविषयकग्रहविरोधिग्रहविषयत्वम् । एवंविधैव गनिरुक्तरत्र सर्वत्र सव्यभिचारलक्षणादावनुसर्तव्येत्यपि कश्चित् ।

---

विषयकस्य कस्यचिन् समूहालम्बनस्य तादृशज्ञानविरोधिबाधादिविषयकत्वेऽपि नातिप्रसङ्गः । स्वावच्छिन्नविषयकत्वव्यापकतादृशज्ञानविरोधिविषयिताकधर्मवत्त्वमिति फलितोर्थः ।

अत्र च विषयितानिष्ठं स्वरूपसम्बन्धरूपतादृशज्ञानविषयविषयकग्रहप्रतिबन्धकतावच्छेदकतात्मकतादृशज्ञानविरोधित्वमेव निवेशनीयम्, न तु विषयनिष्ठं निर्वाच्यं तादृशज्ञानविरोधित्वम्. तस्यैव लक्षणत्वसम्भवेन शेषवैयर्थ्यप्रसङ्गात् । अत्र विषयनिष्ठस्य निर्वाच्यतादृशज्ञानविरोधित्वस्यैव तदपेक्षया लघुतया तदेवाह-तादृशज्ञानविरोधित्वं चे ति ।

तादृशज्ञानविरोधित्वं यदि तादृशज्ञानप्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयिताकधर्मवत्त्वं, तदा पूर्वनिरुक्त यथाश्रुतमूलार्थ एव पर्यवसानात् 'निर्वह्निः पर्वतो वह्निमान्' इत्यादिस्थलीयदोषाव्याप्तितादवस्थ्यमिति तन्निर्वक्ति--ज्ञानविरोधित्वञ्चे ति । तद्विषयविषयके ति । तथा च 'निर्वह्निः पर्वतो वह्निमा' नित्यादौ तादृशज्ञानविरोधिज्ञानाप्रसिद्धावपि तद्विषयविषयकस्य 'निर्वह्निः पर्वत' इत्यादिज्ञानस्य प्रतिबन्धकं यद्वह्निमान् पर्वत इत्यादिज्ञानं तद्विषयतामादायैव वह्निमत्पर्वतादिरूपतत्स्थलीयाश्रयासिद्ध्यादौ लक्षणसमन्वयः ।

अथ घटवद्भूतलादिरूपोदासीनपदार्थविषयकसमूहालम्बनात्मकपक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतद्व्याप्यहेतुप्रकारकज्ञाननिरूप्यविषयकघटवद्भूतलादिज्ञानप्रतिबन्धकज्ञानविषयघटाभाववद्भूतलादावतिव्याप्तिः । न च पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकविशिष्टसाध्यत-

निरूपितव्याप्तिविशिष्टहेतुतावच्छेदकतावच्छिन्नहेतुप्रकारकग्रहत्वव्यापक-विषयिताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वा-वच्छिन्नविषयताकधर्मवत्त्वनिवेशान्न दोषः, घटवद्भूतलादिविषयिताया-स्तादृशग्रहत्वाव्यापकत्वादिति वाच्यम् ; यतः पर्वताद्यंशे वह्निमत्त्वाद्य-नवगाहिनो 'निर्वह्निः पर्वत' इत्यादिज्ञानस्य या वह्निप्रकारकत्वाद्य-निरूपिता निर्वह्नित्वादिप्रकारकतानिरूपितपर्वतादिविषयिता सैव अनाहार्यत्वविशिष्टतया 'वह्निमान् पर्वत' इत्यादिज्ञानप्रतिबध्यता-वच्छेदिका, तस्याश्च 'निर्वह्निः पर्वतो वह्निमा' नित्याद्याकारका-हार्यज्ञानसाधारण्ये मानाभावात् आहार्यज्ञानसामग्र्यास्तादृशविषयिता-प्रयोजकत्वासिद्धेः । विपरीतज्ञानाभावघटितायास्तादृशविषयिताप्रयोजका-नाहार्यज्ञानसामग्र्याश्चाहार्यज्ञानाजनकत्वात् तादृशग्रहत्वव्यापिका वह्नि-मत्त्वादिप्रकारितानिरूपिततादृशपर्वतादिविषयिता सा च न प्रति-बध्यतावच्छेदिका-इति[1] । निर्वह्नित्वादिप्रकारितानिरूपितपर्वतादिविषयिता-त्वेन 'निर्वह्निः पर्वत' इत्यादिज्ञानीयविषयितापि तथाविधग्रहत्व-व्यापिकेति चेत्, तर्हि विषयितात्वादिना घटवद्भूतलादिविषयितानामपि तद्व्यापकतया उदासीनपदार्थवारणमशक्यमिति चेत् ;

मैवम्—यद्रूपावच्छिन्ने यद्रूपावच्छिन्नप्रकारकत्वत्वावच्छिन्नं तादृश ग्रहत्वव्यापकं तद्रूपावच्छिन्नविशेष्यकतद्रूपावच्छिन्नप्रकारकग्रहत्वावच्छिन्न-प्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वावच्छिन्ननिरूपितविषयिताक-धर्मवत्त्वस्य विवक्षणीयतया सर्वसामञ्जस्यादिति दिक् ।

अत्र चाऽस्वरससूचनाय कश्चि दिति । स चोक्तयुक्त्या 'निर्वह्नि-र्वह्निमा' नित्यादिस्थलीयदोषासंग्रहेण । न च धर्मितावच्छेदकत्व प्रत्यासत्त्या वह्निप्रकारकज्ञानं प्रति वह्न्यभावप्रकारकज्ञानस्य प्रति-बन्धकतामते 'निर्वह्निर्वह्निमा' नित्येतादृशज्ञानसमानविषयकाना-

[दी] केचित्तु—यादृशपक्षकयादृशसाध्यकयादृशहेतौ यावन्तो दोषाःसम्भवन्ति तावदन्यान्यत्वम् । एकमात्रदोषस्थले च तत्त्व-मेव हेत्वाभासत्वम् । स च अतिरिक्त एवाऽन्योन्याभाव इति न वैयर्थ्यम् । पञ्चविधभेदोक्तिस्तु तत्सम्भवस्थलाभिप्रायेण, व्यभिचारादेः साध्यादिभेदनियन्त्रितत्वात्, शब्दाभेदमात्रस्य च अकिञ्चित्करत्वादिति प्राहुः ।

---

हार्य 'वह्निमा' नित्याकारकज्ञानप्रतिबन्धकतामादाय लक्षसमन्वयः (अत्रापि) सम्भवतीति वाच्यम्; तादृशमताश्रयणे 'पर्वतो वह्निमा' नित्यादौ वह्न्यभाववद्ध्रदादेर्दोषताप्रसङ्गात् ।

यादृशे ति । सर्वत्र यद्रूपावच्छिन्नार्थकम् । तावदन्यान्यत्व मिति । यत्र यादृशपक्षसाध्यहेतुकस्थले यादृशदोषज्ञानस्य प्रति-बध्यज्ञानं प्रसिद्ध्यति, यथा 'निर्वह्निः पर्वतो वह्निमान् धूमा' दित्यादौ वह्निविशिष्टपर्वतादिरूपाश्रयासिद्धि-धूमाभावविशिष्टनिर्वह्नि-पर्वतादिरूपस्वरूपासिद्ध्यादीनां ज्ञानस्य, तत्र तादृशदोषाणां ग्राह्याभावतद्व्याप्यरूपघटकभेदेन विशेषण विशेष्यभावभेदेन च वि-भिन्नानामनुगतेन विशिष्टपक्षे विशिष्टसाधनवैशिष्ट्यग्रहविरोधित्वरूपा-सिद्धित्वादिनैव तावदन्यान्यत्वघटकभेदप्रतियोगिविधया निवेशः, न तु वह्निविशिष्टपर्वतत्वनिर्धूमत्वविशिष्टनिर्वह्नित्वादिना, प्रयोजनविरहात्। यत्स्थलीययादृशदोषविषयकज्ञानस्य प्रतिबध्यज्ञानमप्रसिद्धम्, यथा 'निर्वह्निर्वह्निमा' नित्यादिस्थलीयस्य च बाधादेर्ज्ञानस्य, तत्स्थलीय दोषाणामनायत्या वह्न्यभावविशिष्टनिर्वह्नित्व वह्न्यभावव्याप्यविशिष्टनिर्व-ह्नित्व निर्वह्निनिष्ठवह्न्यभावत्व निर्वह्निनिष्ठवह्न्यभावव्याप्यत्वादिना च अननुगतरूपेणैव निवेशः ।

अत्र च विशिष्टभिन्नभिन्नत्वस्य शुद्ध (विशेष्य) विशिष्टसाधा-

रणतया 'सर्वमाकाशव' दित्यादौ आकाशाभावादिविशिष्टसर्वादिरूपबाधादिभिन्नत्वस्याप्रसिद्धतया च तत्तद्विशिष्टनिरूपितविषयितान्यतमविषयितानिरूपकतावच्छेदकत्वापर्याप्त्यधिकरणधर्मवत्त्वमेवाभिमतम् ॥ अयञ्च प्रकारो यादृशपक्षसाध्यहेतुकस्थले उक्तसमूहालम्बनानुमितेरप्रसिद्धिस्तत्रैवादरणीयः । यत्र तु तत्प्रसिद्धिस्तत्र लाघवात् यथाश्रुतमूललभ्यं लक्षणमेव साधीयः, शब्दाभेदस्याकिञ्चित्करतायाः स्वयमेव वक्ष्यमाणत्वादित्यवधेयम् ।

यत्र चाश्रयासिद्ध्यादिरेकविध एव दोषः, प्रतिवध्यज्ञानञ्च प्रसिद्धम् 'महानसत्ववान् पर्वतो वह्निमान् धूमा' दित्यादौ, तत्र विशिष्टपक्षग्रहविरोधित्वादिरूपाश्रयासिद्धित्वादेरेव दोषसामान्यलक्षणत्वमुचितम्, न तु महानसत्वाद्यभावविशिष्टपर्वतत्वाद्यवच्छिन्नतादृशाभावव्याप्यविशिष्ट पर्वतत्वाद्यवच्छिन्नादिभिन्नभिन्नत्वस्य निरुक्त समूहालम्बनानुमितिविरोधित्वस्य च गौरवादित्याशयेनाह—**एकमात्रदोषस्थल** इति । एकविध एव यत्र दोषस्तत्र तद्विषयकज्ञानप्रतिवध्यज्ञानञ्च प्रसिद्धम्, तादृशदोषस्थल इत्यर्थः । तेन ग्राह्याभावतद्व्याप्यभेदेन विशेषणविशेष्यभावभेदेन च सर्वत्र दोषाणां नानात्वसम्भवात् एकमात्रदोषस्थलस्याप्रसिद्धत्वेऽपि ('पर्वतान्यः पर्वतो वह्निमान् धूमा' दित्यादावेकमात्रदोषस्थले ग्राह्याभावतद्व्याप्यरूपघटकादिभेदेन विभिन्नाश्रयासिद्ध्यादीनामनुगमकरूपाभावात्तावदन्यान्यत्वस्य लक्षणताया आवश्यकत्वेऽपि च) न क्षतिः । तत्त्वम्—तादृशत्वम्, निरुक्ताश्रयासिद्धित्वादिकमिति यावत् ।

इदमुपलक्षणम्—यत्र परामर्शविरोधिनो व्यभिचारविरोधासिद्धयस्त्रयो दोषा न तु बाधप्रतिरोधौ 'पर्वतो वह्निमान् ह्रदत्वा' दित्यादौ, तत्र तादृशपरामर्शविरोधित्वमेव सामान्यलक्षणम्; यत्र च

बाधप्रतिरोधाश्रयासिद्ध्यादयो दोषा न तु व्यभिचारविरोधौ 'ह्रदो वह्निमान् धूमात्, ह्रदः काञ्चनमयवह्निमान् धूमात्, काञ्चनमय ह्रदो वह्निमान् धूमात्, ह्रदो वह्निमान् काञ्चनमय-धूमात्' इत्यादौ, तत्र विशिष्टपक्षे विशिष्टसाध्यसाधनयोर्वैशिष्ट्या-वगाहि यत् ज्ञानं तद्विरोधित्वमेव तथा ; एवं यत्र व्यभिचारा-सिद्धी एव दोषौ 'काञ्चनमयः पर्वतो धूमवान् वह्ने' रित्यादौ, तत्र विशिष्टपक्षविषयकव्याप्तिविशिष्टहेतुग्रहविरोधित्वादिकं तथेत्यपि बोध्यम् ।

ननु तत्तद्धर्मावच्छिन्नभिन्नभिन्नत्वरूपलक्षण घटक तत्तद्धर्माणां भा-गासिद्धतया हेत्वाभाससामान्ये इतरभेदाननुमापकत्वेऽपि व्यभिचारावा-रकतया तदितरांशवैयर्थ्य मित्यत आह—स चे ति । स च अन्योन्याभावोऽतिरिक्त एवेति योजना । स च—तत्तद्धर्मावच्छिन्न प्रतियोगिताकभेदकूटावच्छिन्नप्रतियोगिताकश्च । अतिरिक्तः—तत्तद्ध र्मातिरिक्तः । तथा च धर्मिभेदान्न वैयर्थ्यम्, तत्तद्धर्मावच्छिन्नप्रति-योगिताकभेदमात्रावच्छिन्नप्रतियोगिताकान्योन्याभावस्य स्वप्रतियोगिता-वच्छेदकीभूतभेदप्रतियोगितावच्छेदक तत्तद्धर्मस्वरूपत्वेऽपि तादृशभेद-कूटावच्छिन्नप्रतियोगिताकभेदत्वस्य नानाधर्मेषु कल्पनापेक्षया तद्वि-शिष्टस्यैकस्यैव भेदस्य लाघवेन कल्पयितुं युक्तत्वादित्यभिप्रायः । एतच्च यथाश्रुताभिप्रायेण । तत्तद्धर्मावच्छिन्ननिरूपितविषयितान्यतम-विषयितानिरूपकतावच्छेदकधर्मवत्त्वस्य लक्षणत्वे त्वधिकरणविकासकतया (अधिकविकासकतया) विशेषणसार्थक्यमित्यवधेयम् ।

ननु साध्यादिभेदेन लक्षणभेदे 'ह्रदो वह्निमान् धूमा' दित्या-दिस्थलीयलक्षणस्य पञ्चहेत्वाभाससाधारण्यासम्भवात् तादृशलक्षणा-क्रान्तानां पञ्चविधत्वोक्त्यसङ्गतिरित्यत आह—पञ्चविधभेदोक्तिस्त्व

ति । पञ्चविधत्वोक्तिरित्यर्थः । **तत्सम्भवस्थले** ति । यत्र पञ्चानामेव हेत्वाभासानां सम्भवः, 'गौरश्वो घटत्वा' दित्यादौ, तत्स्थलीयलक्षणाक्रान्तस्य पञ्चविधत्वाभिप्रायेणेत्यर्थः ।

ननु एवं लक्षणाननुगमादितरभेदानुमाने भागासिद्धिरित्यत आह—**व्यभिचारादे** रिति । **साध्यादिभेदनियन्त्रितत्वात्**—साध्यादिभेदनियन्त्रितलक्ष्यतावच्छेदकत्वात् । तथा च लक्षणस्येव लक्ष्यतावच्छेदकस्याप्यननुगमान्न भागासिद्धिरिति भावः ।

ननु एवमप्यनुगतोक्त्यसम्भवात् नायं प्रकारः साधीयानित्यत आह—**शब्दाभेदस्ये** ति । इदं पुनरिहाधेयम् । तावदन्यान्यत्वमितरभेदानुमापकमेव न तु दोषपदप्रवृत्तिनिमित्तम् ; तथा सति निर्वह्नित्वविशिष्टे वह्नेः साधने धूमो दुष्ट इत्यादौ दुष्टपदस्य वह्न्यभावविशिष्टनिर्वह्नित्वावच्छिन्नान्यतमवदर्थकतया "निर्वह्नित्वादिविशिष्टे वह्निसाधने" इत्यादेरनन्वितार्थकत्वप्रसङ्गात् ; अप्रसिद्ध्या तस्य हेत्वन्वयिनिर्वह्नित्वविशिष्टविशेष्यकवह्न्यनुमितिप्रयोजकत्वार्थकत्वासम्भवात् ; किन्तु अभावप्रयोजकप्रमान्यवृत्तिविषयता निरूपकत्वादिकमेव तथा ; उक्तस्थले च प्रकारता प्रकारतानिरूपितव्याप्तिप्रकारतानिरूपितधूमत्वाद्यवच्छिन्नप्रकारता च उभयमेव साधनपदार्थः । प्रकारतारूपतदर्थेऽपरतदर्थैकदेशव्याप्तिप्रकारतानिरूपकप्रकारतायाश्च पञ्चम्यन्तवह्निपदवाच्यस्य वह्निनिष्ठत्वस्य स्वरूपसम्बन्धेन, साधनपदार्थप्रकारताद्वये च सप्तम्यन्तार्थ निर्वह्नित्वादिविशिष्टविशेष्यतायाश्च निरूपितत्वसम्बन्धेनान्वयः । साधनपदोत्तरसप्तम्या निरूपकत्वं द्वित्वञ्चार्थः । निरूपकत्वे च निरुक्तसाधनपदार्थयोः पृथगन्वयः ; तदन्वितनिरूपकत्वे द्वित्वान्वयः । द्वित्वान्वयितादृशनिरूपकत्वयोः दोषपदार्थघटकाभावे अन्वयः । तथा च निर्वह्नित्वविशिष्टविशेष्यतानिरूपितवह्निनिष्ठप्रकारतानिरूपक-

त्वस्य तादृशविशेष्यतानिरूपिता या वह्निप्रकारतानिरूपितव्याप्तिप्रकारतानिरूपितधूमत्वाद्यवच्छिन्नप्रकारता तन्निरूपकत्वस्य च द्वयोरभावप्रयोजकअमान्यवृत्तिविषयितानिरूपकत्वानित्येवान्वयबोधः। प्रतिवन्धकीभूतभ्रमविषयितानिरूपकीभूताभावमादाय पर्वते वह्निसाधने धूमो दुष्ट इत्यादि प्रयोगवारणाय विषयितायां अमान्यवृत्तित्वं निवेशितम्। दोषघटककेवलसाध्यादौ दोषव्यवहाराभावात्, अत्रायं दोष इत्यादौ स्वविषयकनिश्चयाव्यवहितोत्तरानुमितिनिष्ठतादृशोभयाभावानिरूपकतात्वव्यापकविरोधिविषयिताप्रयोज्यताकधर्मवानेव दोषपदार्थ इति दिक्॥

* इति हेत्वाभाससामान्यनिरुक्तौ द्वितीयलक्षणम्॥ *

## दशाविशेषे हेत्वोरेवाऽसाधारणसत्प्रतिपक्षयोराभासत्वात् तद्बुद्धेरप्यनुमितिप्रतिबन्धकत्वम् ।

---

[दी] स्यादेतत् ; 'शब्दोऽनित्यश्शब्दत्वा' दित्यत्राऽसाधारण्येऽव्याप्तिः ; सर्वसाध्यवद्व्यावृत्तेस्तत्राऽसत्वात् ।

---

## ॥ अथ दशाविशेषः ॥

असाधारण्यस्य पक्षवृत्तित्वे सति साध्यव्यापकीभूताभावप्रतियोगितात्मकस्य सत्प्रतिपक्षस्य च पक्षनिष्ठसाध्याभावव्याप्यवत्त्वरूपस्य बुद्धेर्विरोधिविषयकतया साध्यवत्त्वज्ञानप्रतिबन्धकत्वं निर्विवादमेव । एवञ्च तज्ज्ञानदशायां हेतोरनुमित्यजनकत्वात् तद्बुद्धेः प्रतिबन्धकत्वमावश्यकमित्येतादृशयथाश्रुतार्थपरस्य **दशाविशेष** इत्यादिमूलस्याऽनुत्थितिः । अन्यथा साधारण्यादिज्ञानप्रतिबन्धकताया अपि व्यवस्थापयितुमुचितत्वात् ; अतस्तादृशमूलमन्यथा व्याख्यातुमवतरणिकामाह— **स्यादेत** दिति । इत्यत्र **असाधारण्ये**—एतत्स्थलीयासाधरण्यरूपदोषप्रकारक हेतुविशेष्यकभ्रमविषये सर्वसाध्यवद्व्यावृत्तत्वात्मके । **अव्याप्ति**रिति । तद्विषयकत्वस्य निरुक्तानुमित्यप्रतिबन्धकहेत्वविषयकज्ञानसाधारणतया तादृशप्रतिबन्धकतातिरिक्तवृत्तित्वादिति भावः ।

ननु केवलं सर्वसाध्यवद्व्यावृत्तत्वं न दोषः, अपि तु साधनवृत्तित्वविशिष्टम्, तादृशविशिष्टविषयकत्वं तु न प्रतिबन्धकत्वातिरि-

[दी] एवम् 'शब्दोऽनित्यः कृतकत्वा' दित्यत्र सत्प्रतिपक्षे नित्यत्वव्याप्याद्रव्यद्रव्यत्वादावपि पक्षस्य तद्वत्त्वविरहादित्याशङ्कां तयोरलक्ष्यत्वेन निराकुरुते–दशाविशेष इति ॥ हेत्वोः=सद्धेत्वोः । असाधारणः पक्षमात्रवृत्तिः ॥ सन् प्रतिपक्षो विरोधिपरामर्शो यस्य स तथा । तयोः दशाविशेषे हेतौ सर्वसाध्यवद्व्यावृत्तत्वस्य, पक्षे साध्याभावव्याप्यवत्त्वस्य च भ्रमदशायाम् । आभासत्वात्,–अनुमित्यजनकत्वात् । तद्बुद्धेः–हेत्वादौ साध्यवद्व्यावृत्तत्वादिबुद्धेः ।

---

क्तवृत्तीत्यत आह–सर्वे ति । तत्र–हेतौ । असत्त्वात्–अवृत्तेः–साध्यवति पक्षे हेतोर्वृत्तेरिति शेषः । तथा च तादृशविशिष्टस्याप्रसिद्ध्या तस्य दोषत्वासम्भवेन प्रसिद्धस्याविशिष्टसाध्यवद्व्यावृत्तत्वस्यैव तत्र दोषताया आवश्यकत्वादिति भावः ।

अद्रव्यद्रव्यत्वादा विति । असमवेतद्रव्यत्वादावित्यर्थः । असमवेतत्वस्य ध्वंससाधारणतया नित्यत्वव्याप्यत्वासम्भवाद्विशेष्यांशनिवेशः । अप्यनन्तरमव्याप्तिरित्यनुपज्यते । तद्विषयकत्वस्य पक्षाविषयकज्ञानसाधारणतया प्रतिबन्धकतातिरिक्तवृत्तित्वादिति भावः।

ननु केवलं नित्यत्वव्याप्याद्रव्यद्रव्यत्वादिकम् न तत्र दोषः, अपि तु पक्षनिष्ठतद्वत्त्वमेव । तादृशविशिष्टविषयकत्वन्तु प्रतिबन्धकतानतिरिक्तवृत्त्येवेत्यत आह–पक्षस्ये ति । तथा च पक्षघटितविशिष्टस्याप्रसिद्धतया पक्षाद्यघटितस्यैव दोषत्वमावश्यकमिति भावः। तयोः–तादृशस्थलीययोर्दोषत्वेनाभिमतयोर्धर्मयोः । 'शब्दोऽनित्यः शब्दत्वा' दित्यादौ शब्दत्वादिविशेष्यकानित्यव्यावृत्तत्वादिज्ञानविषये अव्याप्तेः शङ्कानास्पदत्वात्; अलक्ष्यत्वाभ्युपगमेन तत्परिहारस्य

[दी] प्रतिबन्धकत्वं पर मायाति, न तु तद्विषयस्य दोषत्वम्, असत्त्वात्; अन्यथा बाधभ्रमेण अनुमित्यनुदयात् तस्यापि दोषत्वं स्यात्। को हि साध्याभावतद्व्याप्यवत्ताभ्रमयो रनुमितिविरोधित्वे विशेषः ? निर्युक्तिक स्तु प्रवादो ऽश्रद्धेयः ।

---

चात्यन्तासम्भवदुक्तिकत्वाद्धेतुपदं सद्धेतुपरतया व्याचष्टे—हेत्वो रिति । सद्धेत्वोः साध्यवद्व्यावृत्तत्वरूपासाधारण्यसाध्याभावव्याप्यवत्पक्षकत्वरूपसत्प्रतिपक्षत्वासम्भवात् असाधारणसत्प्रतिपक्षपदे अन्यथा व्याचष्टे—असाधारण इति । तथा—प्रकृते सत्प्रतिपक्षपदार्थः । सद्धेत्वोर्दुष्टत्वरूपाभासत्वाऽयोगादाभासपदमन्यथा व्याचष्टे—आभासत्वा दिति । तद्बुद्धे रित्यत्र तत्पदस्य हेतुमात्रपरत्वं न सम्भवति, सत्प्रतिपक्षस्थले प्रतिबन्धकज्ञानस्य हेतुविषयकत्वानियमात्, हेतुविषयकत्वकथनस्याप्रयोजकत्वाद्बुद्धिपदस्यापि बुद्धिसामान्यपरत्वं न सम्भवति । हेत्वादिमात्रविषयकज्ञानस्याप्रतिबन्धकत्वात्, अतस्तत्पदस्य हेतुपक्षोभयपरतया बुद्धिपदस्य साध्यवद्व्यावृत्तत्वसाध्याभावव्याप्यवत्त्वावगाहिबुद्धिपरतया तद्बुद्धिपदं हेतुविषयक साध्यवद्व्यावृत्तत्वरूपासाधारण्य बुद्धिपक्षविषयकसाध्याभावव्याप्यवत्ताबुद्धिपरत्वेन व्याचष्टे तद्बुद्धे रिति । तयोरलक्ष्यतालाभाय हेत्वो रित्यनन्तरश्रुत एवकारः "प्रतिबन्धकत्व" मित्यस्यानन्तरं योजनीयः । तदर्थमन्तर्भाव्य व्याचष्टे—प्रतिबन्धकत्वं परमायाती ति । परम्—केवलम् ।

एवकारव्यवच्छेद्यं स्पष्टयति—नत्वि ति । तद्विषयस्य—तादृश बुद्धिविषयस्य । दोषत्वम्—दोषलक्षणलक्ष्यत्वम् । असत्त्वात्—लक्ष्यताप्रयोजकरूपस्यासत्त्वात् । प्रतिबन्धकीभूतज्ञानप्रमात्वस्यैव तद्विषयस्य लक्ष्यताप्रयोजकत्वादिति भावः । असत्त्वात्—विशिष्टस्याप्रसिद्धत्वादिति

[दी] यत्तु ज्ञानस्य यदनुमितिप्रतिबन्धकतावच्छेदकम् तद्वत्त्वम्, तत्प्रकारकप्रमाविषयत्वं च लक्षणार्थः। तच्च द्विविधम्; विषयरूपं साधारण्यादि; बाधे च प्रमितसाध्याभाववान् पक्षः। तद्विषयकत्वेन ज्ञानस्य अनुमितिप्रतिबन्धकत्वात्। अविषयरूपं च विरोधिसामग्रीकालीनत्वादिकम्। तद्वत्त्वं च ज्ञानस्यैव तद्विषयस्य हेतोरपीति;—

---

तु नार्थः। एकदेश एवाऽव्याप्तेराशङ्कितया विशिष्टाप्रसिद्धेस्तदलक्ष्यतानिर्वाहकत्वविरहेणानुपयोगात्।

अन्यथा—प्रतिबन्धकीभूतभ्रमविषयस्यापि दोषत्वे। बाधभ्रमेण-पक्षे साध्याभावभ्रमेण। तस्य—तद्विषयसाध्याभावादेः। नन्वेवमुक्तस्थले प्राचां दशाविशेषे हेतोर्दुष्टत्वप्रवादो नोपपद्यते इत्यत आह निर्युक्तिकस्त्वि ति। ये तु उपदर्शितस्थलेऽपि दशाविशेषे हेतोर्दुष्टतामङ्गीकुर्वन्तस्तत्साधारण्याय लक्षणमन्यथा व्याचक्षते तेषां मतमुपन्यस्यति यत्त्वि ति। ज्ञानस्ये ति। षष्ठ्यन्तार्थस्य यत्पदार्थे ऽन्वयः। तथा च ज्ञानसम्बन्धित्वविशिष्टं यद्रूपावच्छिन्नं यत्किञ्चित्सम्बन्धेनानुमितिप्रतिबन्धकतावच्छेदकमित्यर्थः। अत्रापि अवच्छेदकत्वमनतिरिक्तवृत्तित्वरूपम्, उक्तयुक्तेः। तत्पदमुभयत्र तद्रूपावच्छिन्नपरम्। लक्षणार्थः—व्युत्क्रमेण लक्षणयोरर्थः।

ननु एतावतैव कथं दर्शितसत्प्रतिपक्षादौ लक्षणसमन्वयः? तत्र प्रतिबन्धकतावच्छेदकीभूतविशिष्टविषयकत्वस्याप्रसिद्धेः, कथं वा व्यभिचारादिकमादाय सव्यभिचारादौ लक्षणसंगमनम्? व्यभिचारादि-[illegible]कत्वस्यैव प्रतिबन्धकतावच्छेदकतया व्यभिचारादेरतथात्वादित्यत [illegible]चे ति। तादृशप्रतिबन्धकतावच्छेदकञ्चेत्यर्थः। भ्रमा-

[दी] तन्न ; तद्वत्त्वं हि हेतो र्नाभेदेन, बाधे तदभावात् । अत एव नाश्रयतया, वह्निव्यभिचारिद्रव्यत्वादिमति धूमेऽतिप्रसङ्गाच्च

---

स्मकबाधप्रतिबन्धकतामादाय आपादितायाः सद्धेतोर्दुष्टताया असम्भवं स्पष्टीकर्तुमाह—बाधे चे ति । बाधज्ञाननिष्ठप्रतिबन्धकतायाञ्चेत्यर्थः । अवच्छेदक इति शेषः । पक्षस्य वास्तवं साध्याभाववत्त्वं निविशते न तु वैज्ञानिकमिति सूचयितुं प्रमिते ति । विषयस्यावच्छेदकत्वे युक्तिमाह—तद्विषयकत्वेने ति । तथा च विषयविषयकत्वस्येव विषयस्यापि विषयतया अवच्छेदकत्वमक्षतमेवेति भावः । विरोधि-सामग्रीकालीनत्वादी ति । विरोधिकोट्यनुमितिसामग्रीकालीनत्वेन परामर्शादेः प्रतिबन्धकत्वमित्यभिमानः । तथा च तदादायैव सत्प्रति-पक्षिते असाधारणे च सद्धेतौ दशाविशेषे दुष्टत्वमिति भावः ।

ननु ज्ञाननिष्ठं विरोधिसामग्रीकालीनत्वमादाय कथं हेतोर्दुष्टत्वम् ? तस्य ज्ञान एव सत्त्वात् इत्याशङ्कां परिहरति तद्वत्त्वञ्चे ति । तद्विषयहेतोरपी ति । तत्कालनिरूपिताधेयतात्मकस्य तत्कालीन-त्वस्याधेयभेदेन भेदानभ्युपगमात्, अभ्युपगमे वा आधेयतासम्बन्धेन तत्कालस्याप्यवच्छेदकतया तमादायैव लक्षणसमन्वयादिति भावः । नाभेदेने ति । विवक्षितुं शक्यमिति शेषः । साध्याभाव-वद्वृत्तित्वादिविशिष्टसाधनादिरूपदोषस्याभेदसम्बन्धेन हेतौ सत्त्वादे-तादृश सम्बन्धेन तद्वत्त्वविवक्षायां न व्यभिचारादिप्रसक्तिः, अतो बाधे तदभावा दिति । वह्न्यभाववद्ध्रदादिरूपबाधे धूमादिहेत्व-भेदासत्त्वादित्यर्थः । तथा च तत्राव्याप्तिरिति भावः । अतएव-बाधिते अव्याप्तेरेव । नाश्रयतया—तद्वत्त्वं विवक्षार्हमिति शेषः । धूमादेर्वह्न्यभाववद्ध्रदानाश्रयत्वादेकज्ञानविषयत्वादिरूपसम्बन्धस्य चा-

**[दी] साध्याभाववत्पक्षस्यैव साध्याभाववद्वृत्ति हेतोर्ज्ञानस्य प्रतिबन्धकत्वात्, साधारण्यादिविषयकत्वस्य ज्ञाननिष्ठस्यैव प्रतिबन्धकतावच्छेदकत्वात् सत्तादिसाध्यके ज्ञानेऽतिप्रसङ्गाच्च, यथाकथञ्चित्तद्वत्त्वस्य चातिप्रसञ्जकत्वात् ।**

---

ऽऽधारत्वानिर्वाहकत्वादिति भावः । अव्याप्तिमुक्त्वा अतिव्याप्तिमाह **वह्निव्यभिचारी** ति ।

ननु साध्याभाववद्वृत्तित्वादिरूपविषय एव प्रतिबन्धकतावच्छेदकः, न तु तत्तद्विशिष्टद्रव्यत्वादिः तदाश्रयश्च न धूमादिरित्याशङ्कां निराकरोति—**साध्याभाववदि** ति । **साध्याभाववद्वृत्तिहेतोर्ज्ञानस्ये** ति । तादृशहेतुविषयकज्ञानस्येत्यर्थः; तथा च वह्न्यभाववद्वृत्तिद्रव्यत्वादिकमपि विषयतया अवच्छेदकमेवेति भावः ।

ननु धूमादेस्तादृशधर्मवत्त्वेऽपि वह्नौ साध्ये धूमो दुष्ट इति व्यवहारस्य नापत्तिसम्भवः । उक्तयुक्त्या तद्धेतुकानुमिति विरोधिरूपवत्त्वस्यैव तत्र दुष्टताव्यवहारनियामकत्वात्, अन्यथा तवाप्यप्रतीकरात् इत्यतोऽन्यत्रातिप्रसङ्गमाह—**साधारण्यादिविषयकत्वस्यचे** ति । **ज्ञाननिष्ठस्य**—ज्ञानवृत्तित्वविशिष्टस्य । **सत्तादी** ति । सत्तावान् ज्ञाना' दित्यादौ ज्ञानहेतुकसत्त्वाद्यनुमितिप्रतिबन्धकतावच्छेदकं. ज्ञानांशे सत्ताद्यभाववद्वृत्तित्वावगाहित्वमादाय सत्त्वे साध्ये ज्ञानं दुष्टमिति व्यवहारापत्तेरित्यर्थः ।

येन केनापि सम्बन्धेन तद्वत्त्वं विवक्षणीयमित्यपि दूषयति—**यथाकथञ्चि** दिति । **अतिप्रसञ्जकत्वा** दिति । उक्तधर्ममादाय सत्त्वादिसाध्यके ज्ञाने धूमाद्यंशे यद्वह्न्यभाववद्वृत्तित्वावगाहित्वं एकज्ञान विषयत्वादिसम्बन्धेन तद्वत्त्वमादाय वह्न्यादिसाध्यके धूमादावपि

[दी] विरोधिसामग्रीसमवहितोऽपि च लिङ्गपरामर्शो न स्वसाध्यानुमितेः प्रतिबन्धकः, मणिसमवहितो वह्निरिव दाहस्य । अथ यद्धर्मविशिष्टज्ञाने सत्यवश्यमनुमितिप्रतिबन्धः,

---

दुष्टत्वव्यवहारापत्तेरित्यर्थः । सत्प्रतिपक्षादिस्थले विरोधिसामग्रीकालीनत्वेन प्रतिबन्धकतामादाय यत् लक्षणसत्त्वमुपपादितम्, तत् दूषयति **विरोधिसामग्री** ति । **न स्वसाध्यानुमितेःप्रतिबन्धक** इति । न स्वजन्यानुमितेः प्रतिबन्धक इत्यर्थः । कारणत्वप्रतिबन्धकत्वयोरेकत्रानभ्युपगमादिति हृदयम् ।

विभिन्नरूपेण तदुभयस्यैकत्रोपगमे प्रतिबन्दिसूचनायाह **मणीति** । "न प्रतिबन्धक" इत्यनुषज्यते । तथा च विरोधिकोट्यनुमितिसामग्रीकालीनत्वेन परामर्शादीनामनुमितिप्रतिबन्धकत्वे मणिसमवहितत्वेन वह्न्यादीनामपि दाहप्रतिबन्धकत्वापत्तिः । मणिसमवहितत्वापेक्षया लाघवेन मणित्वेनैव प्रतिबन्धकता कल्प्यते इति चेत्तर्हि विरोधिसामग्रीकालीनत्वापेक्षया लाघवात् तादृशसामग्रीत्वेन विरोधिपरामर्शत्वेनैव वा प्रतिबन्धकत्वम् प्रकृते कल्पयितुमुचितमिति कथं विरोधिसामग्रीकालीनत्वमादाय लक्षणं सङ्गमनीयम्? तस्य प्रतिबन्धकतातिरिक्तवृत्तित्वादिति भावः । कार्यानुत्पत्तिव्याप्यतावच्छेदकत्वरूपप्रतिबन्धकतावच्छेदकत्वमेव अत्र विवक्षितम्, न तु कारणीभूताभावप्रतियोगितावच्छेदकत्वरूपम्, तच्च विरोधिसामग्रीकालीनत्वेऽप्यक्षतमेवेत्याह **अथे** त्यादिना ।

**यद्धर्मे** ति । यादृशधर्मविशिष्टनिश्चयाव्यवहितोत्तरक्षणत्वव्यापकीभूतःअनुमित्यनुत्पादस्तादृशरूपमेवे त्यर्थः । निश्चयत्वनिवेशात् बाधादिविषयकसंशयसंस्काराद्यव्यवहितोत्तरक्षणे कदाचिदनुमित्युत्पादे

[६.] तदेवाऽत्र प्रतिबन्धकतावच्छेदकमुक्तम् । भवति च प्रतिबन्धकीभूतविरोधिसामग्रीकालीनत्वादिविशिष्टे परामर्शे तथेति चेत् ; न वै कालादिसाधारणकारणघटिता सामग्री क्वापि प्रतिबन्धिका ; विशेषतस्त्वत्र; तत्सत्त्वे कार्योत्पादस्य दुर्वारत्वात् ; किन्तु विरोधिपरामर्शस्तथा ।

---

ऽपि न क्षतिः । अत्र--एतल्लक्षणे । प्रतिबन्धकतावच्छेदकमुक्तम्-प्रतिबन्धकतावच्छेदकपदेन विवक्षितम् । भवति चे ति । विरोधिकोट्यनुमितिसामग्र्याः प्रतिबन्धकत्वकथनं प्रतिबन्धकसमवहितोत्तरक्षणे कार्यानुत्पादस्यावश्यकतया विरोधिसामग्रीकालीनत्वस्य निरुक्तप्रतिबन्धकतावच्छेदकताया आवश्यकत्वप्रदर्शनाय । तथा--अवश्यमनुमित्यनुत्पादः । विरोधिसामग्र्याः प्रतिबन्धकत्वं यदुक्तं तदेवादौ दूषयति न वै इति । न हीत्यर्थः । कालादी ति । घटितान्तं हेतुगर्भविशेषणम् । तथा च कारणसमुदायः सामग्री, सा च कचिदपि न प्रतिबन्धिका, कालादिसाधारणकारणानामपि तदन्तर्निविष्टत्वात्तेषाञ्च प्रतिबन्धकतावच्छेदककोटौ निवेशस्य निष्फलत्वात् प्रतिबध्यकार्येऽपि तेषामनुगुणत्वादित्यर्थः ।

सत्प्रतिपक्षस्थले विरोधिकोट्यनुमितिसामग्र्यास्तत्कोट्यनुमितिप्रतिबन्धकत्वमत्यन्तासम्भवदुक्तिकमेव, तत्र फलानुत्पादेन सामग्र्या एवाऽसत्त्वात् इत्याह विशेषतस्त्वि त्यादिना । अत्र--सत्प्रतिपक्षस्थले । 'सामग्री न प्रतिबन्धिके' त्यनुषज्यते । तत्सत्त्वे--सामग्रीसत्त्वे । कार्योत्पादस्य दुर्वारत्वात्--सामग्र्याः कार्योत्पत्तिनियतत्वात् इति भावः ।

ननु तर्हि तत्र परामर्शादिरूपानुमितिहेतुसत्त्वादनुमितिः कथं नोत्पद्यते इत्यत आह किन्त्वि ति । विरोधिपरामर्शः--साध्या

[दी] यदि च तत्सत्त्वेऽपि तत्साध्यबाधावतारे नानुमितिप्रतिबन्धः प्रामाणिकः ? तदा ऽप्रामाण्यग्रहाभावस्येव तदभावस्यापि वैशिष्ट्यं तत्र निवेश्यताम् । यदा च भ्रमप्रमासाधारणविरोधिपरामर्शसत्त्वे नानुमितिस्तदा तथाविधबाधादिग्रहेपीत्यतिप्रसङ्गः ।

---

भावव्याप्यवत्तानिश्चयः । तथा—अनुमितिप्रतिबन्धकः । ननु यत्र वह्न्यभावव्याप्यवत्तापरामर्शो वह्न्यभावाभाववान् पक्ष इति बाधनिश्चयोपि च वर्तते तत्र वह्निव्याप्यवत्ताज्ञानेन वह्न्यनुमितिर्जन्यते इत्यनुभवसिद्धम् । विरोधिपरामर्शमात्रस्य प्रतिबन्धकत्वे च तन्नोपपद्यते इत्यत आह यदि चे ति । तत्सत्त्वेऽपि--विरोधिपरामर्शसत्त्वेऽपि । तत्साध्यबाधावतारे--तादृशपरामर्शानुमेयविरोधिकोटेः पक्षेऽभावनिश्चयदशायाम् । नानुमितिप्रतिबन्धः--न प्रकृतसाध्यानुमित्यनुत्पादः । "अप्रामाण्यग्रहाभावस्ये" त्यनन्तरं "वैशिष्ट्य" मित्यनुषज्यते । तदभावस्य--विरुद्धकोटिविरहनिश्चयाभावस्य । तत्र--विरोधिपरामर्शप्रतिबन्धकतावच्छेदकगर्भे । निवेश्यता मिति । अत्र विपरीतकोटिव्याप्यवत्तापरामर्शदशायां तत्कोटिविरहनिश्चयसत्त्वे-तत्परामर्शे भ्रमत्वग्रहानन्तरमेवानुमितिः स्वीक्रियते नत्वन्यथेति भ्रमत्वग्रहाभाववैशिष्ट्यनिवेशेनैव उपपत्तौ तादृशबाधग्रहाभाववैशिष्ट्यनिवेशो व्यर्थ इत्यनिर्भरसूचनाय यदि चे त्युक्तम् । अप्रामाण्यग्रहाभावस्य दृष्टान्तविधया प्रतिबन्धकतावच्छेदकत्वं च दर्शितम् ।

ननु अस्तु अनुमितौ विरोधिपरामर्शमात्रं प्रतिबन्धकम् , तथापि तद्घटितविरोधिसामग्रीकालीनज्ञानस्य फलानुत्पादनियतत्वात्तादृशसामग्रीकालीनत्वस्य निरुक्तप्रतिबन्धकतावच्छेदकत्वं दुरुपपादमेव । एवं च तथाविधविरोधिपरामर्शकालीनत्वमादायापि दशा-

[दौ] न चातीतादौ लिङ्गे विरोधिपरामर्शकालीनत्वमपि । यदपि-यद्विषयकत्वेन ज्ञानस्य प्रतिबन्धकत्वं तद्वत्त्वमेव वाच्यम्, सत्प्रतिपक्षे च विरोधिव्याप्त्यादिकमेव तथा; तद्वत्त्वमपि हेतोस्तज्ज्ञानरूपसम्बन्धेन, तस्य समूहालम्बनरूपतया हेतुद्वयविषयत्वादिति ;

---

विशेषे सत्प्रतिपक्षितस्य हेतोर्दुष्टत्वमुपपद्यत एव इत्यतो विरोधिपरामर्शादिकालीनत्वसमशीलबाधादिभ्रमकालीनत्वमादाय सद्धेतावतिप्रसङ्गमाह यदा चे ति ।

तथाविधे ति । भ्रमप्रमासाधारणेत्यर्थः । 'अपी' त्यनन्तरं नाशुमाति रित्यनुषज्यते ; तथा च तादृशं बाधादिग्रहकालीनत्वमपि निरुक्तप्रतिबन्धकतावच्छेदकत्ववद्वृत्त्येवेति भावः । इति–इत्यतः । अतिप्रसंग इति । बाधादेरनित्यदोषतायाः केनाप्यनभ्युपगमेन इष्टापत्त्यनवकाशादिति भावः । विरोधिपरामर्शादिकालीनत्वमादाय सर्वत्र सत्प्रतिपक्षिते दुष्टत्वं नोपपादयितुं शक्यत इत्याह--न चे ति । न हीत्यर्थः । अतीतादा विति । तथा चातीतादिसद्धेतौ विरोधिपरामर्शदशायां भवन्मतसिद्धं सत्प्रतिपक्षितत्वं नोपपद्यते इति भावः । सत्प्रतिपक्षिते सद्धेतौ विरोधिव्याप्यवत्पक्षाप्रसिद्धावपि प्रतिबन्धकीभूतभ्रमविषयप्रसिद्धविरोधिव्याप्त्यादिरेव दोष इति मतं दूषयति–यदपी त्यादिना । यद्विषयकत्वेने ति । तृतीयार्थः स्वरूपसम्बन्धरूपावच्छेदकत्वम्, न तु अनतिरिक्तवृत्तित्वरूपम् ; तथा सति विरोधिव्याप्त्यादेर्दोषत्वानुपपत्तेः, प्रतिबन्धकतायां ज्ञाननिष्ठत्वविशेषणं कामिनीजिज्ञासादिनिष्ठप्रतिबन्धकतावच्छेदकीभूतधर्मेऽतिप्रसङ्गवारणाय ।

नन्नु विरोधिकोटिव्याप्यत्वस्य 'पर्वतो वह्निमान् धूमात्, पर्वतो वह्न्यभाववान् जलत्वा' दित्यादौ प्रतिबन्धकीभूतज्ञानविषयसमवाया-

[दी] तदपि तुच्छम्, साध्याभाववत्पक्षविषयकत्वेन साध्याभाववत्पक्षज्ञानप्रमात्वविषयत्वेन वा ज्ञानस्य प्रतिबन्धकत्वम्, तस्य च साध्यवत्यपि पक्षे सम्भवादतिव्याप्तेः । विशिष्टविषयकत्वेन प्रतिबन्धकत्वं, विशिष्टं च तत्राऽप्रसिद्धमिति चेत् ?

---

दिसम्बन्धावच्छिन्नपक्षधर्मतायाश्च प्रकृतहेतावभावात् कथं तस्य दुष्टत्वम् ? अत आह—तद्वत्त्वमपी ति । विरोधिव्याप्त्यादिमत्त्वमपीत्यर्थः । तज्ज्ञानरूपे ति । स्वविषयकज्ञानविषयतात्मकेत्यर्थः । सम्बन्धविशेषस्याविवक्षितत्वादिति भावः । तादृशसम्बन्धवत्तां प्रकृतहेतौ उपपादयति—तस्ये ति । विरोधिव्याप्त्यादिज्ञानस्येत्यर्थः । समूहालम्बनरूपतये ति । न च एवं क्रमिकपरामर्शद्वयस्थले सत्प्रतिपक्षत्वानुपपत्तिरिति वाच्यम्; तत्रापि तादृशव्याप्त्यादिप्रकारकप्रकृतहेतुविषयकेश्वरज्ञानादिकमादाय तद्वत्त्वोपपत्तेः ।

साध्याभाववत्पक्षविषयकत्वेन—साध्याभावप्रकारेण पक्षावगाहित्वेन । साध्याभाववत्पक्षज्ञाने ति । साध्याभावप्रकारकपक्षज्ञानांशे प्रमात्वविषयकत्वेनेत्यर्थः । मतभेदेन विकल्पः । तस्य—तादृशज्ञानस्य । साध्यवत्यपि पक्षे—पक्षे साध्यवत्यपि सति; पक्षस्य साध्यवत्त्वे सत्यपि इति यावत् । अतिव्याप्ते रिति । 'पर्वतो वह्निमान् धूमा' दित्यादौ बाधभ्रमनिष्ठप्रतिबन्धकतावच्छेदकविषयतानिरूपकवह्न्यभावादेः स्वविषयकज्ञानविषयत्वादिसम्बन्धेन वैशिष्ट्यस्य हेतौ सत्त्वादिति भावः । इदमुपलक्षणम्; वह्निमान् धूमादित्यादौ विरोधिपरामर्शशून्यकालेऽपि तद्विषयविरोधिव्याप्त्यादिकमादायापि हेतोर्दुष्टत्वप्रसङ्गो बोध्यः; तदापि पक्षांशे तद्विशिष्टविशेषणकसमूहालम्बनज्ञानसम्बन्धेन हेतौ तद्वैशिष्ट्यसम्भवात् ।

[दी] तर्हि किं सर्वत्र सत्प्रतिपक्षे साध्याभाववान् पक्षः प्रसिद्धः । यथाकथञ्चित्सम्बन्धेन तद्वत्त्वं चाऽतिप्रसक्तम् , धूमादेरपि ज्ञानरूपेण तदाश्रयाश्रयत्वादिना वा सम्बन्धेन व्यभिचारादिमत्त्वात् ।

---

अनतिरिक्तवृत्तित्वरूपमेवावच्छेदकत्वं विवक्षणीयमित्यभिप्रायेण बाधभ्रमप्रतिबन्धकतामादाय अतिप्रसङ्गस्योद्धारमाशङ्कते--विशिष्टे ति । साध्याभावविशिष्टपक्षविषयकत्वमेव प्रतिबन्धकतानतिरिक्तवृत्ति, न तु साध्याभावविषयकत्वमात्रमित्यर्थः ।

विशिष्टश्च--साध्याभावविशिष्टपक्षश्च । तत्र--बाधस्थले । सत्प्रतिपक्षस्थले सर्वत्र तादृशविशिष्टं प्रसिद्धमेवेत्यभिमानः । भ्रमं निराकरोति--तर्हि कि मिति । पक्षावृत्तिसाध्यकसत्प्रतिपक्षे साध्याभावव्याप्यविशिष्टपक्षस्य प्रसिद्धत्वात् सर्वत्रे ति । सत्प्रतिपक्षे--सत्प्रतिपक्षतया भवन्मतसिद्धे । प्रसिद्ध इति । तथा चानतिरिक्तवृत्तित्वरूपमवच्छेदकत्वं विवक्षितुमशक्यमिति दर्शितातिव्याप्तिर्दुर्वारैवेति भावः । तद्वत्त्वघटकसम्बन्धं वितर्क्यापि दूषयति--यथाकथञ्चि दिति । अतिप्रसक्तम्--सद्धेतुसाधारणम् ; तथा च पर्वतादेर्वह्न्यादिमत्त्वे साध्ये धूमादौ दुष्टताव्यवहारापत्तिरिति भावः । तादृशसम्बन्धेन तद्वत्त्वस्य धूमादिरूपसद्धेतुसाधारणत्वं स्फुटयति--धूमादे रिति । ज्ञानरूपेण--स्वविषयकज्ञानविषयत्वेन । तदाश्रयाश्रयत्वादिना--स्वाश्रयद्रव्यत्वाश्रयत्वादिनेत्यर्थः । आदिना एककालीनत्वपरिग्रहः । व्यभिचारादिमत्त्वात्--वह्न्यभाववद्वृत्तित्वादिसत्त्वात् ।

ननु यादृशसम्बन्धावच्छिन्नयत्प्रकारतानिरूपितयद्धर्मिविशेष्यताशालित्वेन ज्ञानस्य प्रतिबन्धकत्वं तेन सम्बन्धेन तद्वत्त्वमेव दुष्टत्वमिति वाच्यम् ; एवञ्च स्वरूपादिसम्बन्धावच्छिन्न साध्याभाववद्वृत्तित्वादि-

[दी] यादृशसम्बन्धावगाहित्वेन ज्ञानस्य प्रतिबन्धकत्वम् । तेन तद्वत्त्वञ्च न सर्वत्र सत्प्रतिपक्षिते हेतौ ; अस्ति च क्वचित्सद्धेताविति कृतं पल्लवितेन ।

प्रकारतानिरूपितहेतुविशेष्यताशालित्वेनैव व्यभिचारादिज्ञानस्य प्रतिबन्धकता, तेन सम्बन्धेन तद्वत्त्वस्य च हेतोरभावात् न तत्राति व्याप्तिरित्याशङ्कां निराकुरुते--यादृशे ति । सर्वत्र सत्प्रतिपक्षिते इति । 'ह्रदो वह्निमान् धूमवत' इत्यादिस्थले धूमवदादिरूपहेतौ व्याप्यताघटकसम्बन्धेन वह्न्याद्यभावव्याप्यवत्ताया असत्त्वादिति भावः । 'ह्रदो वह्निमान् धूमा' दित्यादौ धूमादिरूपहेतौ व्याप्यताघटकसमवायादिसम्बन्धेन वह्न्याद्यभावव्याप्यधूमत्वादेस्सत्त्वात् सर्वत्रे त्युक्तम् । क्वचित्सद्धेता विति । सद्धेतुतादशायामपि क्वचिदित्यर्थः । 'पर्वतो वह्निमान् धूमा' दित्यादौ विरोधिपरामर्शासमवधानदशायामपि प्रतिबन्धकतावच्छेदकप्रकारताश्रयवह्न्याद्यभाववह्निमदन्यत्व तद्व्याप्यादेः तादृशप्रकारतावच्छेदकस्वरूपादिसम्बन्धेन धूमादिवृत्तित्वादिति भावः ।

यत्तु ज्ञानसम्बन्धेन तद्वत्त्वमेव दुष्टत्वम्, ज्ञानञ्च विशिष्टव्यवहाराद्यनुरोधात् ; क्वचिदेव कदाचिदेव कस्यचित् सम्बन्धः, एवञ्च विरोधिव्याप्त्यादेर्ज्ञानं विरोधिपरामर्शदशायामेव प्रकृते हेतौ तत्सम्बन्धः तदैव तत्र दुष्टताव्यवहारात् ; साध्याभावादेर्भ्रमात्मकज्ञानं तु तत्र न कदाचिदपि तथा परमेश्वरादिसाधारणं, साध्याभावविशिष्टपक्षादेर्ज्ञानन्तु तत्र सर्वदैवेति=तत्तु हासास्पदमेव ; सकलाभियुक्तपुरुषसाधारणस्य नियतव्यवहारस्यासिद्धत्वात्, वासनाविशेषवतां तादृशव्यवहारस्य विपरीतस्यापि सम्भवात्, तज्ज्ञानस्य अनियतसम्बन्धत्वाऽसाधकत्वादिति । बाधसत्प्रतिपक्षज्ञानयोः प्रत्यक्षशाब्दज्ञानंप्रति प्रतिबन्धकत्वमभिधाय बाधसत्प्रतिपक्षयोर्लिङ्गज्ञानजन्यज्ञानमात्रवृत्तिधर्मावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकताश्रयाभावप्रतियोगिज्ञानाविषयत्वरूपं लिङ्गा-

**यद्यपि बाधसत्प्रतिपक्षयोः प्रत्यक्षशाब्द-ज्ञानप्रतिबन्धकत्वान्न लिंगाभासत्वम् ; तथापि ज्ञायमानस्याऽऽभासस्याऽत्रलक्षणम्।**

---

[दी] यद्यपी ति । स्थाणुत्वाभावस्य तद्व्याप्यकरादेश्च निश्चये स्थाणुत्वप्रत्यक्षशाब्दयोरनुदयात् । न चैवम् "नरशिरः कपालं शुचि प्राण्यङ्गत्वा" दित्यादिनाऽप्यागमविरोध स्यात् ; तत्रा ऽनुकूलतर्काभावेन बलवत्तरागमविरोधेन च व्याप्तिनिश्चयस्या ऽनुमितेश्चाऽनुत्पत्तेरिति भावः ।

---

साधारणदोषत्वं न भवतीति आक्षिप्तं मणिकृता, तादृशप्रतिबन्ध-कतायाश्च युक्तिर्नोक्तेति न्यूनतापरिहाराय तत्र युक्तिमाह—**स्थाणुत्वा-भावस्ये** ति । **स्थाणुत्वप्रत्यक्षशाब्दयो** रिति । समानधर्मिता-वच्छेदककस्य स्थाणुत्वप्रकारकस्य लौकिकसन्निकर्षाद्यजन्यस्य प्रत्यक्षस्य शाब्दस्य चेत्यर्थः । एवम्—शाब्दबुद्धौ बाधतदभावव्याप्यवत्ताज्ञानयोः प्रतिबन्धकत्वे । **नरशिरः कपाल** मिति । नरशिरःकपाले शुचित्वाद्यनु-मापकेन तद्धर्मिकप्राण्यङ्गत्वपरामर्शेन स्वतः फलद्वारा वा आग-मजन्याशौचबोधप्रतिरोधः स्यादित्यर्थः । स चानुभवविरुद्धः, तत्र प्राण्यङ्गत्वज्ञानदशायामपि शाब्दाशौचज्ञानस्यानुभवसिद्धत्वादिति भावः । समाधत्ते **तत्रे** ति । तादृशाशौचज्ञानप्राक्काल इत्यर्थः । अनुकू-लतर्काभावेन व्याप्तिनिश्चयस्य बलवत्तरागमविरोधेना ऽनुमितेश्चाऽनुत्प-त्तेरिति योजना ।

**एवञ्च** वास्तवव्याप्यधर्मस्य येन केनापि रूपेण ज्ञानमेव न विरोधि, अपि तु व्याप्यत्वरूपेण । अत्र च प्राण्यङ्गत्वस्य ज्ञानेऽपि व्याप्तिग्राहकतर्कविरहेण व्यभिचारशङ्कयाशौचव्याप्यत्वेन

यद्वा बाधेन प्रत्यक्षादौ न ज्ञानं प्रतिबध्यते, किन्तु उत्पन्नज्ञाने अप्रामाण्यं ज्ञाप्यते। अनुमितौ तु उत्पत्तिरेव प्रतिबध्यते ते च सव्यभिचार विरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च ॥

॥ इति तत्त्वचिन्तामणौ सामान्यनिरुक्तिः ॥

---

[दी] "यद्वे" त्यादि अभ्युच्चयमात्रम्; प्रत्यक्षं प्रति आनुमानिकबाधनिश्चयस्याऽप्रतिबन्धकत्वेऽपि शाब्दं प्रति प्रतिबन्धकत्वात्। योग्यताज्ञानेन अन्यथासिद्धत्वात् तदभावो न तत्र हेतुरिति चेत् ? एवमप्युपनीतभानविशेषं प्रति तत्त्वेन हेतुताया दुर्वारत्वात्।

इति श्रीमद्रघुनाथभट्टाचार्यशिरोमणिविरचितायां तत्त्वचिन्तामणिव्याख्यायाम् दीधित्यपराख्यायाम् हेत्वाभाससामान्यनिरुक्तिः समाप्ता ॥

---

तज्ज्ञानं न सम्भवति, कारणान्तरविरहेण यत्र व्यभिचारशङ्काविरहस्तत्र कथञ्चित् व्याप्तिग्रहेऽपि गृहीतप्रामाण्यकागमतात्पर्यविषयविपरीतविषयकत्वेन तत्राप्रामाण्यं गृह्यते । तथा च तादृशप्राण्यज्ञत्वज्ञानं न शौचानुमितिजनने शाब्दाशौचज्ञानप्रतिबन्धे वा प्रभवतीति समुदायार्थः । आगमे प्रामाण्यग्रहश्च शिष्टपरिग्रहादिनैव भवति । यावच्च तादृशपरामर्शेनाप्रामाण्यं गृह्यते तावन्न भवत्येवागमप्रवृत्तिरिति भावः ।

यद्वे त्यादिग्रन्थेन बाधादिज्ञानस्यानुमित्यतिरिक्तज्ञानाप्रतिबन्धकत्वं व्यवस्थाप्य बाधादेर्लिङ्गासाधारणदोपत्वमेवोपपादितम्; तन्न

सङ्गच्छते, बाधितार्थस्य शाब्दाभ्युपगमेऽनुमितेरपि अनपवादात् तत्राप्रामाण्यग्राहकतया बाधादिग्रहस्य प्रवृत्त्यादिविरोधित्वोपपत्तेरित्यत्र कल्पे ग्रन्थकृतोऽनिर्भरमाह **यद्वेत्यादी** ति ।

ननु आनुमानिक बाधादिनिश्चयदशायामपि लौकिकसन्निकर्षादितः प्रत्यक्षोत्पत्त्या बाधनिश्चयसामान्यस्य प्रत्यक्षंप्रति प्रतिबन्धकत्वं न सम्भवतीति अनुमित्यसाधारणप्रतिबन्धकत्वं बाधनिश्चयत्वावच्छिन्नस्याऽक्षतम्, अतो यद्विषयकनिश्चयत्वेनानुमित्यसाधारणप्रतिबन्धकत्वं तत्त्वस्य लक्ष्यताप्रयोजकत्वाभिप्रायेण यद्वे त्यादिग्रन्थस्य बाधलक्ष्यतोपपादकत्वं सुष्ठु सङ्गच्छत इत्यत आह **प्रत्यक्षं प्रती** ति । समानेन्द्रियजन्यबाधनिश्चयस्य सत्त्वे लौकिकप्रत्यक्षस्यानुत्पत्ते "रानुमानिके" ति बाधनिश्चयविशेषणम् ।

**शाब्दं** प्रती ति । तथा च तावतैव लिङ्गासाधारणदोषत्वव्याघात इति भावः । तत्रापि तदप्रतिबन्धकत्वमाशङ्कते **योग्यते** ति । **अन्यथासिद्धत्वा** दिति । बाधादिनिश्चयदशायां योग्यताज्ञानरूपकारणविरहेणैव शाब्दज्ञानानुत्पादादिति भावः । **तदभावः**- बाधादिनिश्चयाभावः । **तत्र**--शाब्दबुद्धौ । यद्यपि योग्यतासंशयाद्वितीयक्षणे स्मरणात्मकायोग्यतानिश्चये सति द्वितीयक्षणे शाब्दज्ञानवारणाय तदभावस्य शाब्दधीहेतुत्वस्यावश्यकत्वम्, तथापि बाधादिज्ञानस्य शाब्दाप्रतिबन्धकत्वेऽपि निर्विवादोपनीतभानविशेषप्रतिबन्धकतयैव बाधादौ लिङ्गासाधारणदोषत्वनिराकरणत्व सम्भवात् तत्रैव तन्निराकरोति **एवमपी** ति । **उपनीतभानविशेषम्**--दोषविशेषाजन्योपनीतभानम् । **तत्त्वेन**--बाधनिश्चयाद्यभावत्वेन । **दुर्वारत्वा** दिति । बाधादिनिश्चयदशायामनुमितेरिव तादृशोपनीतभानानुत्पादस्य सर्वानुभवसिद्धादिति भावः ।

इति श्रीमन्महामहोपाध्याय गदाधर भट्टाचार्य चक्रवर्ति विरचितायाम्
युक्तिनिकरकल्लोलमालातरङ्गितकल्पनापयःपारावाररूपिण्याम्
अनुमानदीधिति टीकायाम् हेत्वाभाससामान्यनिरुक्तिः
सम्पूर्णा ॥

